श्रीगणेशाय नमः ॥

# ॥ कृत्यसारसमुच्चयः ॥



सत्तार्क्किक महामहोपाध्याय श्रीमदमृतनाथ
शर्म्मणा विरचितः ॥



श्रीकवलेश्वरसिंहाज्ञामधिगम्य
श्रीबाळशास्त्रि शर्म्मणा
पण्डितेन संशोधितः ॥



काश्यां ।
यक्षेश्वरनाम्नि यन्त्रालये मुद्रितः ।
मूल्यम् १)

सन् १९०२ ।

॥ श्रीगणेशाय नमः ॥

# अथ कृत्यसारसमुच्चयः प्रारभ्यते।



वामाङ्गासक्तकान्ताकचकुसुममयोभालनेत्रानलार्चिः
पीनोष्मामौलिचञ्चत्सुरनगरनदीनीररम्यःसदानः।
स्फीतोत्तंसेन्दुकान्तिर्द्विरददृतिदृढछादनाव्यक्तशीतः
शम्भुर्भस्मास्थिकुन्दप्रकरपरिवृतःपातुसर्वर्त्तुमूर्त्तिः ॥ १ ॥
तार्किकामृतनाथशर्मबुधोहिकृत्यसमुच्चयम्
व्यातनोतिविलोक्यपूर्वनिबन्धग्रन्थचयानमुम्।
मैथिलव्यवहारसिद्धसुकर्मकाण्डविराजितम्
बोधनादिमुदप्रदंसरलोक्तितोबहुयत्नतः ॥ २ ॥

अथ मासनिरूपणम्। तत्र मासकृत्ये निरूपणीये मासानिरूपणे तत्कृत्यनिरूपणासम्भवान्मासस्तावदादौ निरूप्यते तत्र मासाश्चतुर्विधःतथाहि ज्योतिषे सौरश्चसावनश्चैवचान्द्रोनक्षत्रएवचेति तत्रएकसंक्रमणमारभ्यापरसंक्रमणपूर्वं यावत् सौर अनियतत्रिंशद्दिवसात्मकः सावनः दर्शानन्तरप्रतिपदमारभ्यामावस्यांतश्चान्द्रः तथाहि ज्योतिषे दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तुसावनोमासः रविसंक्रान्तिसुचिन्हःसौरोपिनिगद्यतेसद्भिःदर्शाद्दर्शमवधीकृत्य तेन दर्शानन्तरप्रतिपद इत्यर्थः चान्द्रस्य शुक्लप्रतिपदारम्भकत्वे वचनान्तरमपि तथाहिइन्द्राग्नीयत्रहूयेतेमासादिःसप्रकीर्तितः इति एतद्व्याख्यानं मा...

मासप्रकरणे वक्ष्यते कृष्णप्रतिपदमारभ्य पूर्णिमान्तोपि चान्द्र एव अत्र प्रमाणानि अथभाद्रपदेमासिकृष्णाष्टम्यांकलौयुगे इति स्मृतिः अश्वयुक्कृष्णपक्षेतुश्राद्धंदेयंदिनेदिने इति मनुवचनं कृष्णादिरपि चान्द्र एवेति कृत्यमहार्णवलेखनं च नाक्षत्रस्तु अश्विन्यादिरेवत्यंतः नाक्षत्रमिन्दोर्भगणभ्रमाच्चेति रत्नमालायाः ॥

अथ कर्मविशेषेमासविशेषमाह । ज्योतिषे विवाहादौ स्मृतःसौरोयज्ञादौसावनःस्मृतः शेषेकर्मणिचान्द्रःस्यादेषमासविधिस्मृतः विवाहादावित्यादिपदादुपनयनादिसंस्कारराशिविशेषविहितस्नानादिनवान्नश्राद्धादिजन्ममासनिषिद्धक्षौरादिकर्मपरिग्रहः यज्ञादिपदादशौचपरिग्रहः शेषेकर्मण्येकोद्दिष्टपार्वणाष्टकातिथिकृत्यादौ तथाहिपार्वणेत्वष्टकाश्राद्धेचान्तमिष्टंतथाश्विकमितिवाक्येऽष्टकासाहचर्येणकृष्णादिचान्द्रस्यैवाब्दिकनिमित्तकस्यावसायादिति मासमीमांसायां गोकुलनाथोपाध्यायाः तिथिकृत्यंकृष्णादिव्रतेशुक्लादिरेवचेति ब्रह्मपुराणम् संकल्पादावपि कृष्णादिरेवमासो ग्राह्यः तथैव शिष्टाचारात् अत्र नाक्षत्रस्तुजातकविषये इति रत्नमाला चित्रापूर्णमासेदीक्षेरन्मुखंवाएतत्संवत्सरस्येत्यादिश्रुतेः ॥

अथ चैत्रकृत्यम् । वारुण्यादिनिर्णयश्च । मासेषुचैत्रस्य प्राथम्यादादौ चैत्रकृत्यमित्येवनिरूप्यते अथ चैत्रकृष्णत्रयोदशोशतभिषायुक्ता वारुणो वरुणदेवता शतभिषानक्षत्रयोगात् अत्रगङ्गास्नाने फलमाह स्कान्दे वारुणेनसमायुक्तामधौकृष्णात्रयोदशो गङ्गायांयदिलभ्येतशतसूर्य्यग्रहैःसमा इति शतभिषा-

युक्ता सा त्रयोदशी महावारुणी तथाहि स्कान्दे शनिवारसमायुक्तासामहावारुणीस्मृता गङ्गायांयदिलभ्येतकोटिसूर्यग्रहैः-समा सा चैत्रकृष्णा त्रयोदशी शतभिषायुक्ता शतभिषाशुभ-योगशनिवारयोगे महामहावारुणी तदुक्तं स्कान्दे शुभयोगसमायुक्ताशनौशतभि[illegible]ायदि महामहेतिविख्याताात्रिकोटिकुल-मुद्धरेदिति कुलं पुरुष इति याज्ञवल्क्यदीपकलिका चैत्रकृष्ण-त्रयोदश्यामेवैतादृशयोगे महामहावारुणीति तस्या उपक्रम एवै तल्लेखनात् अत्र योगत्रये गङ्गायामेवफलमन्यत्रानुक्त इति तिथितत्वचिन्तामणौमहेशठक्कुराः अत्र रात्रौ वारुण्या-दिस्नानं न कर्त्तव्यम् राहुदर्शनादिप्रतिप्रसूतेतरसर्वकर्मणि पर्युदस्तत्वादाचार्यचूडामणिः अन्येतुमाफलश्रुते रात्रावपि-स्नानङ्कर्त्तव्यमेव महानिशातुविज्ञे यामध्यमप्रहरद्वयम् तस्यां-स्नानन्नकुर्वीतकाम्यनैमित्तिकादृते इति देवलोक्तेः एतद्योग-त्रये स्त्रिया अपि स्नानं कर्तव्यमेव न च स्नानंकुर्वतियानार्यश्च-न्द्रे शतभिषाङ्गते सप्तजन्मभवेयुस्तादुर्भगाविधवाध्रुवमिति प्र-चेतोवचनात्तन्निषेध इति वाच्यम् तस्यारागप्राप्तस्नानविषयत्वे-नैव महेशठक्कुरादिनिबन्धकृद्भिर्व्याख्यातत्वात् चैत्रशुक्लप्रति-पद्देवीपूजादौ परयुतैव ग्राह्या तच्चाश्विनकृत्ये वक्ष्यते चैत्रशु-क्लाष्टम्यां ब्रह्मपुत्रस्नानं स्कान्दे चैत्रेमासिसिताष्टाम्यांयोनरोनि-यतेन्द्रियःस्नायाल्लौहित्यतोयेषुसयातिब्रह्मणःपदम् लौहित्यो ब्र-ह्मपुत्रः तत्र सङ्कल्पः ओमद्ये त्यादिसर्वपापक्षयपूर्वकब्रह्मपदग-मनकामोब्रह्मपुत्रस्नानमहङ्करिष्यइति ब्रह्मपुत्रमहाभागशन्त-नोःकुलसम्भव आमोघागर्भसम्भूतपापं लौहित्यमेहर इति पं-

ठित्वा स्नायात् तत्र सम्पूर्णचैत्रस्नाने चैत्रन्तुसकलंमासंशु-
चिःप्रयतमानसः लौहित्यतोयेयःस्नायात्सकैवल्यमवाप्नुयात्
ओमद्य त्यादिकैवल्यप्राप्तिकामश्चैत्रमासंव्याप्यब्रह्मपुत्रस्नानम-
हङ्करिष्य इति तत्र संङ्कल्पः ॥

अथ रामनवमी । चैत्रशुक्लनवम्यां रामपूजा तद्व्रतं च ब्रह्मपुराणे कृत्वैवब्रह्महत्यादिपापेभ्योमुच्यतेध्रुवम् बहुनाकिमिहोक्तेनमुक्तिस्तत्रकरेस्थिता तस्य रामपुजाव्रतकर्तुः अकरणेदोषमाह स्मृतिः यस्तुरामनवम्यांवैमोहाद्भुंक्तेनराधमः कुम्भीपाकेषुघोरेषुपच्यतेनात्रसंशयः इयंच नवमीमध्यान्हव्यापिनी ग्राह्या तत्र स्मृतिः चैत्रशुक्लातुनवमीपुनर्वसुयुतायदि सैवमध्यान्हयोगेनमहापुण्यतमाभवेत् उभयदिने मध्यान्हयोगे परैव ग्राह्या अष्टमीविद्धासनक्षत्रापिनोपोष्येति माधवः गौडास्तु नवमीचाष्टमीविद्धात्याज्याविष्णुपरायणैरिति वचनाद्व्यवस्थापयन्ति स्कान्दे जनकस्यमहर्षेस्तुकूपः परमधार्मिकः तत्रस्नात्वाचपीत्वाचपुर्जन्मनविद्यते इति ॥

अथ वैशाखकृत्यम् । ब्रह्मपुराणे एकभुक्तमथोनक्तमयाचितमतन्द्रितः माधवेमासियःकुर्याल्लभतेसर्वमीप्सितम् स्कान्दे त्रयाकार्याचवैशाखेदेवेदेयागलन्तिका उपानद्व्यजनंछत्रंसूक्ष्मवासांसिचन्दनम् जलम्पात्राणिदेयानितथापुष्पगृहाणिच पानकाणिचचित्राणिद्राक्षारम्भाफलान्यपि तिथितत्वे ददातियोहिमेषादौसक्तूनंबुघटान्वितान् ॥ पितृनुद्दिश्यविप्रेभ्यः सर्वपापैर्विमुच्यते तथा वैशाखेयोघटंपूर्णंसभोज्यम्वैद्विजन्मने ददातिसुरराजेन्द्रसयातिपरमाङ्गतिम् ॥

अथ अक्षत्याज्यानाह । कांश्यम्मांसंमसूरान्नंचणकङ्कोद्रवन्तथा शाकम्मधुपरान्नंचपुनर्भोजनमैथुनं वारिपूर्णघटदानविधिः ॐ वारिपूर्णघटायनमः ३ कुशोपरि ओँ ब्राह्मणायनमः ३ घटं सिक्त्वा ओमद्य त्यादिमेषार्कसंक्रमणप्रयुक्तपुण्याहेपुण्यकालेवाअमुकगोत्रस्य श्रीअमुकशर्मणोममस्वर्गकामोमेषार्कव्याप्यप्रत्यहंघटपरिमितजलंवरुणदैवतंयथानामगोत्रायब्राह्मणायाहंददे ततो दक्षिणां दत्वापठेत् एषधर्मघटोनित्यंब्रह्मविष्णुशिवात्मकः अस्यप्रसादात्सकलाममसन्तुमनोरथा इति ॥

अथ अक्षयतृतीया । वैशाखशुक्लतृतीया अक्षयतृतीया सा चतुर्थीयुक्ता ग्राह्या तथाहि पक्षधरोर्यातिथिचन्द्रिकायां गोभिलःवैशाखस्यतृतीयायांपूर्वविद्धाङ्करोतियःहव्यन्देवानगृह्णन्तिकव्यञ्चपितरस्तथा ब्रह्मवैवर्तेरम्भाख्यंवर्जयित्वातुतृतीयाद्विजसत्तम अन्येषुसर्वकार्य्येषुगणयुक्ताप्रशस्यते इति गणयुक्ताचतुर्थी युक्ता चतुर्थीयुताया अलाभे द्वितीया युतापि ग्राह्या एकादशीतृतीयाचषष्ठीचैवत्रयोदशी पूर्वविद्धापिकर्तव्यायदिनस्यात्परेहनि इतिब्रह्मवैवर्तात् इयं युगादिः तत्र श्राद्धंकरणे फलमाह मात्स्ये कृतंश्राद्धंविधानेनमन्वादिषुयुगादिषु हायनादिहिसाहस्रं पितृणांतृप्तिदम्भवेत् अत्र श्राद्धं पूर्वाण्ह एवकर्तव्यं इतिशूलपाणिः अयमेव मैथिलस्मार्तपक्ष इतिठक्कुराः एत्तृतीयमभिधाय ब्रह्मपुराणे तस्यांकार्य्यायवैर्होमः यवैर्विष्णुम्प्रपूजयेत् यवान्दद्याद्द्विजातिभ्यः प्रयतःप्राशयेद्यवान् पूजादिविधायातिशयिता क्षययवदानजन्यफलप्राप्तिकामनयायवान्दद्यात् तद्वाक्यमेतत्फलानुसारेणोह्यकरणं द्रव्यान्तरदानेपि अक्ष-

यफलप्राप्तिकामनया इत्यादिवाक्यम् नारदीये वैशाखेशुक्लप-क्षेतुतृतीयायान्तथैवच गङ्गातोयेनरःस्नात्वामुच्यतेसर्वकिल्विषैः ओमद्ये त्यादिसर्वकिल्विषविमुक्तिकामो गङ्गायांस्नानमहंकरि-ष्ये इति गङ्गास्नानसङ्कल्पः कौशिकीस्नानप्रकरणे रामायणे आ-दिकाण्डे वैशाखेमासिकाकुस्थतृतीयायाभवेत्तिथिः शुक्लपक्षेनरः स्नात्वाअश्वमेधफलंलभेत् कृत्तिकाऋक्षसंयुक्ताराकायाकार्ति-केभवेत् । कोकामुखेतुकौशिक्यांस्नात्वास्वर्गेवसेन्नरः ओंअद्ये-त्यादिअश्वमेधफलप्राप्तिकामः कौशिक्यांस्नानमहङ्करिष्ये इति सङ्कल्पः वैशाखपूर्णिमामभिधाय विष्णुपुराणे कृष्णाजिनन्ति-लान्कृष्णान्हिरण्यम्मधुसर्प्पिषो ददातियस्तुविप्रायसर्वंतरतिदु-ष्कृतम् इति अस्यां गंगास्नानेओंअद्ये त्यादिगङ्गास्नानजन्यफ-लसहस्रगुणाधिकफलप्राप्तिकामोगङ्गायांस्नानमहङ्करिष्ये ॥

अथ ज्येष्ठकृत्यम् । ज्येष्ठामावास्यायां वटमूले सावित्रीपू-जनम् वटप्रदक्षिणं च स्त्रियः कुर्य्युः इयममावास्या पूर्वयुतैव कार्य्या तदुक्तं स्कान्दे कृष्णाष्टमीचतुर्थी चसावित्रीवटपैतृकी शुक्लात्रयोदशीरम्भानोपोष्यास्स्युःपरान्विता इति स्मृतिश्च शि-वात्रशिवदुर्गाचदूर्वाचैवहुताशनीगोपूजाचवटच्छायाकर्तव्याप्र-थमेदिने इति ॥

अथ तिथीनांवेधविचारः । तत्र प्रातःकाले द्विमुहूर्तवेधः द्विमहूर्त्तोपिवेधस्याद्यातिथिर्वृद्धिगामिनीति दक्षोक्तेः सायङ्का-लेत्रिमुहूर्तवेधः पक्षद्वयेपितिथयःतिथिपूर्वान्तथोत्तराम् त्रिभि-र्मुहूर्तैर्विध्यन्तिसमान्ययोम्विधःस्मृत इति पैठीनसिवचनात् यांतिथिंसमनुप्राप्ययात्यस्तंपद्मनीपतिः सातिथिस्तद्दिनेप्रोक्ता-

त्रिमुहूर्त्तैवयाभवेत् इति स्कान्दोक्तेश्च इति तिथितत्वचिन्तामणौ ठक्कुराः ज्येष्ठशुक्लतृतीयायां पञ्चाग्निव्रतं राजमार्तण्डे भद्रे कुरुप्रयत्नेन रम्भाख्यंव्रतमुत्तमम् ज्येष्ठशुक्लतृतीयायांस्नातानियमतत्पराः एतद्व्रतोद्यापनं पञ्चवर्षे समाचारः इयमेव रम्भाख्या सा च द्वितीयायुतैव कार्य्या युग्मा२ग्नि३कृतु४भूतानि५षण्६मुन्यो७र्वस८रंध्रयोः९रुद्रे ण११द्वादशी१२ युक्ताच्चतुर्दश्या१४थपूर्णिमा१५ प्रतिपद्यात्वमावस्यातिथ्योर्युग्मंमहाफलम् व्यस्तंमेतन्महाघोरंहन्तिपुण्यंपुराकृतमिति निगमात् रंभाख्यांवर्जयित्वातुतृतीयाद्विजसत्तम अन्येषुसर्वकार्येषुगणयुक्ताप्रशस्यते इति ब्रह्मवैवर्तवचनात् ॥

अथ दशहरा। राजमार्तण्डे ज्येष्ठेमासिसितेपक्षेदशमीहस्तसंयुता हरतेदशपापानितस्माद्दशहरास्मृता कुजहस्तयुतादशमीमभिधायतत्रैव पुण्यन्दद्याद्पिदशगुणन्त्वाजिमेधायुतस्येति एतद्दशमीमभिधायस्कान्दे यांकाञ्चित्सरितंप्राप्यदद्याद्दर्भतिलोदकं मुच्यतेदशभिःपापैःसमहापातकोपमैः दद्यादिति पितृभ्यः इत्यादियोगाधिको फलाधिक्यात्तत्रैव योगवाहुल्यं तत्रैवेयं ग्राह्या ज्येष्ठमलमासे सत्यपि तत्रापि दशहराप्रशंसा न तु शुद्धसमयएवेति नियमोनिवन्धमात्रे तथा दशहराःशुभोत्कर्षाश्चतुर्ष्वपियुगादिषु इति तिथितत्त्वचिन्तामणौ ठक्कुरमहेशलिखनं दशपापान्याह राजमार्तण्डे पारुष्यमनृतञ्चैवपैशुन्यंचापिसर्वतः असम्वद्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधं अदत्तानामुपादानंहिंसाचैवावधानतः परदारोपसेवाचकायिकंत्रिविधम्मतं परद्रव्येष्वभिध्यानंमनसानिष्टचिन्तनं वितथाभिनि-

वेशश्चमानसन्त्रिविधंस्मृतं अस्यां गङ्गास्नाने सङ्कल्पः ओंअ-द्येत्यादिदशविधपापक्षयकामो गङ्गायांस्नानमहङ्करिष्ये इति आस्यामेव सेतुवन्धे रामेश्वरदर्शनं अस्यांस्थापितत्वात् तथाहि दशयोगेसेतमध्येलिङ्गरूपधरंहरं रामोवैस्थापयामासशिवलि-ङ्गमनुत्तमम् ॥

अथषाढकृत्यम् । मैथिलस्मार्तमते एकादश्यामेव हरिश-यनं दक्षिणात्यमते द्वादश्याम् गौडमते चोभयमिति बोध्यम तथा भारते आषाढेतुसितपक्षेएकादश्यामुपोषितः चातुर्मास्य-व्रतंकुर्याद्यत्किंचिदखिलोनरः नित्यमेतद्व्रतं । दैवादकरणे कार्तिकमात्रेपि कर्तव्यम् तथाहि भारते वार्षिक्याश्चतुरोमा-सान्वाहयेत्केनचिन्नरः व्रतेननोचेदाप्नोतिकिल्विषम्वत्सरो-द्भवं असम्भवेतुलार्केपिकर्तव्यंतत्प्रयत्नतः । आषाढसिते रवि-वारे पुलिकवन्धनमक्तम् ज्योतिःसारे शुचिसितदिनकरवारे-करमूलेवद्धपुलिकमूलस्य नागरेरिवनागाःप्रयान्तिकिलदूरत-स्तस्य तन्मन्त्रोप्ययमेव वृहद्वशिष्ठः अकृत्वापुलिकैर्वन्धप्रायश्चि-त्तीयतेनरः चातुर्मास्येव्यतीतेतुमुक्तिस्तस्यकराद्भवेत् ॥

अथ श्रावणकृत्यम् । राजमार्तण्डे सिंहकर्कटयोर्मध्येसर्वा-नद्योरजस्वलाः तासुस्नानन्नकुर्वीतवर्जयित्वासमुद्रगाः सिंहो-भाद्रः कर्कटः श्रावणमासः मासश्चात्र सौरोग्राह्यः द्वैतपरिशि-ष्टेतथैवाभिधानात् नद्यश्चाष्टसहस्रधनुःप्रमाणं यासां ताः त-न्न्यूनगर्तः तथाहि धनुःसहस्राण्यष्टौचगतिर्यासांनविद्यते न-तानदीशब्दवाच्यागर्तास्तेपरिकीर्तिताः चतुर्हस्तदण्डोधनुः त-थाहि विष्णुधर्मोत्तरे द्वादशांगुलिकःशंकुतद्द्वयस्तुशयःस्मृतः त-

च्चतुष्कन्धनुःप्रोक्त क्रोशोधनुसहस्रिक इति । शयो हस्तः समुद्रगाः तासुप्रेत्यभिज्ञायमानसमुद्रगामिन्यः तासु गङ्गामहा॰ नदो ता अपि कृष्णा वेणी गोदावरी तुङ्गभद्रा ताम्रपर्णी कावेरी रेवा सिन्धु गोमतीत्येकादशाहुस्त एव शिष्टाः तपनस्यसु॰ तागङ्गागोमतीचसरिद्वरा रजसाचनदुषन्तियेचान्येदशसंज्ञकाः तपनस्य सुता यमुना काल विशेषेपि रजोयोगेपि स्नाने दोषाभावमाह देवलः उपाकर्मणिचोत्सर्गेप्र तत्स्नानेतथैवच चन्द्रसूर्यग्रहेचैवरजोदोषो नविद्यते । उपाकर्म राजोपरिसंस्कारविशेषः स च दक्षिणदेशे प्रसिद्धः नदीतीरवासिनान्तु रजोयोगेपि सर्वदा नदीस्नाने दोषाभावमाह निगमः नदुष्येतीरवासिनामिति । व्याघ्रपादपि अभावे कूपवापीनामन्येनापि समुद्धृतः रजोदृष्टेपिपयसिग्राम्यभोगोनदुष्यतीति अन्येनेतिकुम्भादिनेति स्मार्ताः । श्रावणशुक्लतृतीयायांमधुश्रावणीव्रतम् तृतीया॰ नभसःशुक्लामधुश्रावणिकास्मृता इतिठक्कुरधृतवचनात् इद॰ ञ्चपरयुतायामेव कार्य्यमित दिवोदासः स्मृतिश्च आद्यामधुश्रावणिकाकज्जलीहरितालिका चतुर्थी मिश्रितास्त्रीभिर्दिवानक्ते विधीयते इति रम्भाख्यां वर्जयित्वा तु तृतीयेत्यादिवचनैः चतुर्थीयुतेयं कार्य्या ॥

अथ गणेशचतुर्थीनिर्णयः । श्रावणशुक्लचतुर्थी गणेशचतुर्थी गणेशचतुर्थीमाघेवेति विचार्यम् सा च पूर्वविद्धा ग्राह्या तथाहि तृतीयासंयुतायातु साचतुर्थीफलप्रदा कर्तव्याव्रतिभि॰ स्तास्तुगणनाथसुतोषिणीति । गणनाथं सुतरां तोषयतीति गणेश्वरव्रते तृतीयायुता चतुर्थी विधेया अन्यदेवताव्रते हि

गणनाथसुतोषिणीत्यसङ्गतम् स्यात् । तस्माद्विनायकव्रते च-तुर्थींतृतीयायुतैवोपोष्यावत्सपूजाधेनुपूजायाः पृथगुपादानादिति तिथिचन्द्रिकायां पक्षधरमिश्राः । बृहस्पतिः चतुर्थी गणनाथ-स्यमातृविद्धाप्रशस्यतेइति एतच्चोभयदिने मध्यान्हव्यापौ उ-त्तरदिनमात्रे मध्याह्नव्यापौ तु उत्तरदिन एव मध्याह्नव्यापि-नीचेत्स्यात्परतश्चपरेहनि इति बृहस्पतेः ॥

अथ नागपञ्चमी । श्रावणशुक्लपञ्चमीनागपूजादौषष्ठीयुता अन्यपञ्चम्यस्तुचतुर्थी युताः काय्र्याः तथाहि चमत्कारचि-न्तामणौ स्मृतिः पञ्चमीनागपूजादौकार्य्याषष्ठीसमन्विता तस्या-न्तुतुषितानागाइतरासुचतुर्थिकेति इतरासु एतद्भिन्नपञ्चमीषु चतुर्थिकेतियोगः प्रशस्ताइतिशेषः । स्मृतिः श्रावणेपञ्चमीशु-क्लासम्प्रोक्तानागपञ्चमी तान्परित्यज्यपञ्चम्यश्चतुर्थी सहिता इति इयञ्च शुक्ला पञ्चमी माण्डरब्राह्मणमात्रपूज्या शूद्रैरपि पूज्या कृष्णा तु पञ्चमी स्वदसन्मान्यातिप्रशस्तेति सर्वस्मा-र्तराद्धान्त इति तिथितत्वचिन्तामणौ ठक्कुराः ॥

अथ रक्षाबन्धनम् । श्रावण पूर्णिमायां भद्राशून्यायां-रक्षार्थं रक्षिकाबन्धनं । भद्रायां तन्निषेधमाहस्मृतिः भद्रायां-द्वे नकर्तव्यंश्रावणीफाल्गुनीतथा श्रावणीनृपतिंहन्तिग्रामंह-न्तिचफाल्गुनी इति इयं तु पूर्वविद्धा ग्राह्या श्रावणीदौर्गनव-मीदूर्वाचैवहुताशनी पूर्वविद्धातुकर्त्तव्याशिवरात्रिवलेर्दिनमि-तिबृहद्यमवचनात् ॥

अथ भाद्रकृत्यम् । भाद्रकृष्णचतुर्थ्यांबहुलापूजा सा च तृतीयायता ग्राह्या परयुताया दोषश्रवणात् तथाहि दिवोदासः

गौरीचतुर्थीवटधेनुपूजादुर्गार्चनंदर्भरहोलिकाच गोवत्सपूजा-शिवरात्रिरेतापराब्रिताध्नन्तिनृपंसराष्ट्रमिति। अथबहुलापू-जासङ्कल्पः ओमद्ये त्यादिसर्वं पापक्षयपूर्वकधनधान्यसुतान्वि-तगोसमृद्धिपूर्वकदिव्यविमानारोहणगोलोकप्राप्तिकामोद्यादि-यावज्जीवम्प्रतिभाद्रकृष्ण चतुर्थ्याम्बहुलापूजनव्रताचरणमहङ्क-रिष्ये इति प्रथमारम्भे सङ्कल्पः पूजा तत्र पञ्चदेवता विष्णु-गौरीकुलदेवतारोहितपर्वतचन्द्रसेनसोमिलगोपकामकामरूपि-व्याघ्रवत्सबहुला एतेषां पूजां कृत्वा कथां श्रुत्वागोग्रासं दत्वा अचाराद्यवान्नभक्षणं कुर्य्यादिति॥

अथ भाद्रे गोप्रसवे दोषमाह। नारदः भानौसिंहगते-चैव यस्यगौस्सम्प्रसूयते मरणन्तस्यनिर्दिष्टंषड्भिर्मासैर्नसंशयः इति। तत्रशान्तिम्प्रवक्ष्यामियेनसम्पद्यतेशुभम् प्रसूतान्तत्क्ष-णादेवतांगांविप्रायदापयेत् ततोहोमम्प्रकुर्वीतघृताक्तैराजस-र्षपैः आहुतीनांघृताक्तानामयुतं जुहुयात्ततः सोपवासःप्रयत्नेन-दद्याद्विप्रायदक्षिणाम् तथा सिंहराशौगतेसूर्य्येगोप्रसूतिर्यदा-भवेत् पौषेचमहिषीसूतेदिवैवाश्वतरीतथा तदानिष्टम्भवेत्किं-चित्तच्छान्तौशान्तिकञ्चरेत् अस्यवामेतिसूक्तेनतद्विष्णोरिति-मन्त्रतः जुहुयाच्चतिलाज्येनशतमष्टोत्तराधिकम् मृत्युञ्जयवि-धानेनजुहुयाच्चतथायुतम् श्रीसूक्तेनतथाम्नायाच्छान्तिसूक्ते-नवापुनः मध्यरात्रेनिशीथेवायदागौः क्रन्दतेसदा ग्रामेवास्व-गृहेवापिशान्तिकम्पूर्ववद्दिशेत् मार्गं परिशिष्टे माघेतुधेच-महिषीश्रावणेवडवादिवा सिंहेगावःप्रसूयन्तेस्वामिनोमृत्युदा-यकाः तत्रापि शान्तिः कार्य्या॥

अथ भाद्रकृष्णाष्टम्यां कृष्णजन्माह । तिथितत्त्वचिन्तामणौ चैत्रेतुशुक्लपञ्चम्यांभगवान्मीनरूपधृक् । ज्येष्ठशुक्लेतुद्वादश्यांकूर्म्मरूपधरोहरिः चैत्रकृष्णनवम्यान्तुहरिर्वाराहरूपधृक् नरसिंहश्चतुर्दश्यांवैशाखेशुक्लपक्षके मासिभाद्रपदेशुक्लद्वादश्याम्वामनोहरिः राधेकृष्णतृतीयायांरामोभार्गवरूपधृक् चैत्रशुक्लनवम्यान्तुरामोदशरथात्मजः नभस्येतुद्वितीयायांबलभद्रोभवद्धरिः श्रावणेबहुलेऽष्टम्यांकृष्णोभूर्लोकरक्षकः ज्येष्ठशुक्लद्वितीयायांवौद्धःकल्कीभविष्यति श्रावणोत्र चान्द्रमासः शुक्लादिः तेन कृष्णादिरीत्या भाद्र एव इति ॥

अथ भाद्रकृष्णाष्टम्यां कृष्णस्य पूजनं व्रतं च स्त्रीपुंसयोःसामान्याधिकारमिति समयप्रदीपः एतच्चनित्यम् अकुर्वन्निरयंयातियावदिन्द्राश्चतुर्दशेति नरोवायदिवानारीकृष्णजन्माष्टमीव्रतम् नकरोतितदाघोराव्यालीभवतिकानने इतिभविष्यपुराणवचनाभ्यामकरणेदोषश्रवणात् नित्यतयातत्रसङ्कल्पोनास्तीतिव्रतपद्धतिः । वस्तुतस्तु अकुर्वन्निरयमित्यादियथेष्टफलमाप्नुयादितिवचनाभ्यान्नित्यकाम्यमिदमितिकृत्यमहार्णवः इयमष्टमीचन्द्रोदयव्यापिनी यदा तदा जयन्ती व्रतम् उभयदिने चन्द्रोदयव्यापित्वे उत्तरदिने तथाहि अग्निपुराणे वर्ज्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमी सऋक्षापिनकर्त्तव्यासप्तम्यासंयुता यदि । पद्मपुराणे पञ्चगव्यंयथाशुद्धं नग्राह्यं मद्यसंयुम् रविविद्धातथात्याज्यारोहिण्यासंयुताष्टमी यद्युत्तरदिनेचन्द्रोदयव्यापिनीनाष्टमी तदासप्तमीसंयुताग्राह्या तदुक्तं विष्णुपुराणे कार्य्याविद्धापिसप्तम्यारोहिणीसंयुताष्टमी जयन्तीशिवरात्रि-

श्चकार्य्यैभद्राजयान्वितेकृतोपवासतिथ्यन्ते तत्रकुर्य्यात्तुपराण-मिति यदाचोदये किञ्चिन्मात्रमष्टमी तदुपरि सकला नवमी तदा जयन्तीव्रतेऽष्टमी स्वल्पाप्युपोष्या तदुक्तं पद्मपुराणे उदये-चाष्टमीकिञ्चिन्नवमीसकलायदि भवेद्बुधैनसंयुक्ताप्राजापत्य-र्क्षसंयुता अपिवर्षशतेनापिलभ्यतेवानवाविभो इति । तिथि-चन्द्रिकायां पक्षधरमिश्रलिखनम् पूर्व्वविद्धाष्टमीयातुउदयेनव-मीदिने मुहूर्त्तमपिसंयुक्तासम्पूर्णासाष्टमीभवेत् कलाकाष्टामुहू-र्त्तापियदाकृष्णाष्टमीतिथिः नवम्यांसैवग्राह्यास्यात्सप्तमीसंयुता-नहि इतिपद्मपुराणाभिधानात् एवमेव मिश्रद्वैतनिर्णये रुद्र-धरवर्षकृत्ये गौडदाक्षिणात्यग्रन्थमात्रे बहुव्यवस्थाबोध्येति शि-वम् तिथितत्वचिन्तामणौ महेशठक्कुरलिखनान्नवमीयुक्ताया-मेवाष्टाम्याञ्जयन्तीव्रतम् ॥

अथ महालक्ष्मीपूजनादि विधिः । एतदष्टमीमारभ्या-खिलकृष्णाष्टमी यावत्प्रत्यहं महालक्ष्मीपूजा व्रतं कथाश्रवणं च षोडशवर्षपर्य्यन्तम् ॥

अथ कुशोत्पाटनम् । भाद्रामावास्यायां कुशोत्पाठनमाहम-रीचिः।मासेनभस्यमावास्यातस्यांदर्भंचयोमतः अयातयामास्तेद-र्भाविनियोज्याः पुनः पुनरिति नभसि श्रावणेत्रापि शुक्लादि-श्चान्द्रमासः तेन श्रावणीपूर्णिमोत्तरामावास्यायां कुशोत्पाटन-मिति । कुशोत्पाटनमन्त्रस्तु कुशाग्रे वसतेरुद्रःकुशमध्येतुके-शवःकुशमूलेवसेद्ब्रह्माकुशान्मेदेहिमेदिनि । कुशम्प्रतिनिधी-नाहस्नानसूत्रभाष्येकुशाःकाशमयादुर्वाउसीराश्चैवमन्दरा इति कुशाः कुशकार्य्यकारिण इति संख्यापरिमाणम् । निषिद्धकु-

शानाह लघुहारीतिः चितिदर्भाःपथिदर्भायेदर्भायज्ञभूमिषु स्त-
रणासनपिण्डेषुषट्कुशान्परिवर्जयेत् पिण्डार्थंयेस्तृतादर्भायैः-
कृतंपितृतर्प्पणं मूत्रोच्छिष्टेधृतायेच्चतेषांत्यागोविधीयतेइति ॥

अथ हरितालिका । भाद्रशुक्लतृतीयायां हरितालिका त-
थाहि दिवोदासीये भाद्रस्य कज्जलीकृष्णाशुक्लाचहरितालिका ।
सा च परयुताग्राह्यातथाहि माधवः मुहूर्तमात्रसत्त्वेपिदिनेगौ-
रीव्रतम्परे शुद्धाधिकायामप्येवंगणयोगप्रशंसनात् । स्कान्दे क-
लाकाष्ठामुहूर्त्तापिद्वितीयायदिदृश्यते सातृतीयानकर्त्तव्याकर्त्त-
व्यागणसंयुतेति ब्रह्मवैवर्तेपि रम्भाख्यावर्जयित्वातुतृतीयाया-
मित्यादिपुराणेसमुच्चये द्वितीयाशेषसंयुक्तांयाकारोतिविमोहिता
सावैधव्यमवाप्नोतिप्रवदन्तिमनोषिणइति । संयुक्तामितितृती-
यामिति शेषः अत्रपार्वतीशिवयोः पूजा ॥

अथ चतुर्थ्यां चन्द्रदर्शनदोषमाह । मार्त्तण्डेयः सिंहादित्ये
शुक्लपक्षेचतुर्थ्यांचन्द्रदर्शनम् मिथ्याभिशापङ्कुरुतेतस्मात्पश्ये-
न्नतन्तदा तदेति चतुर्थ्यां न चन्द्रं पश्येदित्यर्थः तेन तत्रोदि-
तस्य पञ्चम्यां दर्शनेनदोषशान्त्यर्थं सिंहप्रसेनमवधादित्यादि-
धात्रेयिकावाक्यं प्राङ्मुखउदङ्मुखोवा पठेत् पठेद्धात्रेयिका-
वाक्यंप्राङ्मुखोवाप्युदं मुखइति आर्षवचनात् । प्रदोषवापिनीयं
ग्राह्याउभयदिनेप्रदोषव्यात्तौपञ्चमीयुक्ता । युग्माग्निकृतुभूता-
नित्यादि निगमात् ॥

अथ भाद्रशुक्लषष्ठी सूर्यषष्ठी सा च सर्वमते स्कन्दव्रतातिरि-
रिक्ता परयुता ग्राह्या युग्मात् नागविद्धानकर्तव्याषष्ठीचैवक-
दाचनेति स्कान्दाः अत्रैव राधाव्रतन्तच्च सप्तमीयोगेन कार्य्यं ॥

अथ भाद्रशुक्लाष्टमी । दूर्वाख्या सा पूर्वयुता ग्राह्या तथाह बृहद्यमः श्रावणीदुर्गनवमीदूर्वाचैवहुताशनीपूर्वविद्धैव-कर्त्तव्याशिवरात्रिर्बलेर्दिनमिति ॥

अथ भाद्रशुक्लचतुर्दश्यामनन्तव्रतम् । साचत्रिमुहूर्त्ताप्यौद-यिकीग्राह्या इति माधवाचार्य्यः तथाहि उदयेत्रिमुहूर्तापिग्रा-ह्यानन्तव्रते तिथिरिति घटिकामात्रमप्यौदयिकीग्राह्यमितिनि-र्णयामृतः तथा पौर्णमास्यासमायोगेव्रतं चानन्तकंचरेदिति भविष्ये ऽव्यहेप्यौदयिकत्वेपूर्णत्वात्पूर्वविद्धाग्राह्येति स्मार्त्ताः ॥

अथ भाद्रशेषदिनत्रयेगस्त्यर्घदानम् तत्रमानम् ब्रह्मवैवर्त्ते अप्राप्ते भास्करेकन्यांशेषभूतैस्त्रिभिर्दिनैः अर्घन्दद्यु रगस्त्याय-गौडदेशनिवासिनः । नारसिंहे शङ्खे तोयम्विनिः क्षिप्यसितपु-ष्पाक्षतैर्युतम् मन्त्रेणानेनवैदद्याद्दक्षिणाभिमुखः स्थितः अनेन-शङ्खपुष्पफलंतोयमितिमन्त्रेण अत्रदिनत्रये मन्त्रत्रयं यथा कुम्भ-योनिसमुत्पन्नमुनीनांमुनिसत्तम उदयंते लङ्काद्वारेऽर्घो यम्प्र-तिगृह्यताम् शङ्खं पुष्पम्फलन्तोयंरत्नानिविविधानिच उदयन्ते इत्यादि काशपुष्पप्रतीकाशवन्हिमारुतसम्भवः उदयन्ते-लङ्केत्यादि ॥ ३ ॥

अथाश्विनकृत्यम् । मनुः अश्वयुक्कृष्णपक्षेतुश्राद्धंदेयन्दि-नेदिने त्रिभागहीनंपक्षंवात्रिभागंत्वर्द्धमेववा दिनेदिने प्रति-दिने न तु तिथौतिथौ मुख्यार्थत्यागापत्तेः श्राद्धविवेकादयो-प्येवम् तथा च प्रतिपदादिअमावास्यान्तः पार्वणकालो मुख्यः तदशक्तस्यपञ्चम्याद्यमावास्यान्तः । तत्राप्यशक्तस्य अष्ट-म्याद्यमावस्यान्त इति चत्वारः कल्पा इति तात्पर्यम् एतत्प-क्षचतुष्टयाशक्तः नैकस्मिन्नपि दिने पार्वणं कर्त्तव्यम् तथाहि

योवैश्राद्धन्नरःकुर्य्यादेकस्मिन्नपिवासरे तस्यसम्वत्सरंयावत्सं-तृप्ताः पिरोभुवमिति अकरणे दोषमाह स्मृतिः सूर्य्येकन्याङ्गते-श्राद्धंयोनकुर्यादगृहाश्रमीधनंपुत्राःकुतस्तस्यपितृनिश्श्वासपीड-नात् अतो नित्यमिदम्पार्वणम् नन्दायांभास्करदिने इत्यादि न-न्दादिश्राद्धनिषेधवचनानि पक्षश्राद्धव्यतिरिक्तानि बोध्या-नीतिठकुराः सर्वेष्वप्येषु पक्षेषुचतुर्दशी त्यागः । यथा मनुः कृष्णपक्षेदशम्यादौवर्जयित्वाचतुर्दशीं श्राद्धेप्रसिद्धास्तिथयो-यथैतानयथोत्तराः ॥

अथ शस्त्रादिहतानामेवचतुर्दश्यांश्राद्धम् तथाहिदेवीपु-राणे आहवेषुविपन्नानांजलाग्निभृगुपातिनाम् चतुर्दश्याम्भवे-त्पूजामावास्यायान्तु कामिकीति। वायुपुराणेपि युवानन्तु गृहेय-स्यमृतास्तेषान्तु दापयेत् शस्त्रेणवाहतायेवैतेषान्दद्याच्चतुर्द-शीमिति शस्त्रहतश्राद्धमेकोद्दिष्टविधिनाकर्त्तव्यम् तथाहि चतु-र्दश्यान्तु यच्छ्राद्धंसपिण्डीकरणेकृते तदेकोद्दिष्टविधिनाकर्त्तव्यं-शस्त्रघातिनामिति युवानः षोडशवर्षमारभ्यत्रिंशद्वर्षपर्यन्तव-यस्काविवक्षिता इति रत्नाकरः । शस्त्रघातिनां शस्त्रेण हता-नामित्यर्थः ॥

अथ महालक्ष्मीपूजनंव्रतञ्च । भाद्रकृष्णाष्टमीमारभ्या-श्विनकृष्णाष्टमीयावन्महालक्ष्मीपूजनंव्रतञ्च इयमष्टमी चन्द्रो-दयव्यापिनी ग्राह्या तत्रैव पूजोक्तेः परदिने चन्द्रोदयादूर्ध्वं त्रिमुहूर्त्तव्यापित्वे परैव अन्यथापूर्वैव तथा च स्मृतिः पूर्वावा परविद्धावाग्राह्याचन्द्रोदयेसदा त्रिमुहूर्त्तापिसापूज्यापरतश्चो-र्ध्वगामिनीति ॥

अथ जीवत्पुत्रकाष्टमी । आश्विनकृष्णाष्टमीजीवत्पुत्रि-काख्या तथाहि भविष्ये इषेमास्यसितपक्षेचाष्टमीयातिथि-र्भवेत् पुत्रसौभाग्यदास्त्रीणाङ्ख्यातासाजीवपुत्रिका शालिवाह-नराजस्यपुत्रोजीमूतवाहनः तस्यां पूज्यस्सनारीभिःपुत्रसौभाग्य-लिप्सया । इयमष्टमी प्रदोषव्यापिन्युपोष्या प्रदोषसमये-स्त्रीभिःपूज्योजीमूतवाहनः पुष्करणींविधायाथप्राङ्गणेचतुर-श्रिकामिति भविष्यपुराणात्। यद्युभयदिने प्रदोषव्याप्तिस्त-दापरे हन्येव प्रधानकालानुरोधात् नवम्यधिकरणपारणानु-रोधाच्च पूर्वदिने व्रतेतु वक्ष्यमाण वचनेन अष्टम्यां पारणे दोषश्रवणेन तदन्ते निशिपारणे निषेधेन च उपवासद्वयोप-पत्तिः यदि पूर्वेद्युः प्रदोषव्याप्तिर्न परे द्युरिति तदापूर्वेद्युरेव प्रदोषानुरोधबोधकपूर्वोक्तवचनात्। पूर्वेद्युरपरे द्युर्वाप्रदोषे-यत्रचाष्टमी तत्रपूज्यस्सदास्त्रीभीराजाजीमूतवाहनः इति वि-ष्णुधर्मोत्तरीयाच्च । तिथिचन्द्रिकायां पक्षधर मिश्रोप्येवम्। यत्तुठक्कुरैः सप्तमीयुताष्टमीकर्तव्येत्यभिहितन्तदपिगुरुमिश्रै-कवाक्यत्वानुरोधेन पूर्वदिनमात्रेप्रदोषव्यापिन्यष्टमी विषय-कमेवावधेयम्। पारणन्तुपरदिने तिथ्यन्ते कार्यम् आश्विन-स्यासिताष्टम्यांयाःस्त्रियोऽन्नञ्चभुञ्जते मृतवत्साभवेयुस्ताविः-धवादुर्भगाध्रुवमिति भविष्यात्। विष्णुधर्मोत्तरे नवम्यांपा-रणविधानाच्च। उभयदिने प्रदोषे तदव्याप्तौ उदयगामिन्यां व्रतम् । लक्ष्मीव्रतञ्चाभ्युदितेशशाङ्के यत्राष्टमीचाश्विनकृ-ष्णपक्षे यत्रोदयम्वैकुरुतेदिनेशस्तदाभवेज्जीवितपुत्रिकासाइति दामोदरमिश्रधृतवचनात् दिनेशः सूर्यः तथाचोभयदिने

प्रदोषेऽष्टम्यलाभे सूर्योदयकालीनायद्दिनेऽष्टमीतद्दिनेजीमूत-वाहनपूजनव्रतमिति तात्पर्यम् एवैवऽथवस्थापरमानन्दठक्कुर-कृतवर्षपद्धतावपि इति तिथिचन्द्रिकायां मिश्राः ॥

अथ अन्वष्टकाश्राद्धम् । नवम्यामन्वष्टकाश्राद्धम् तत्र-कात्यायनः अन्वष्टकासुनवभिःपिण्डैःश्राद्धमुदाहृतम् पित्रादि-मातृमध्यञ्चततोमातामहान्तकमिति । ब्रह्माण्डपुराणे पितॄ-णाम्प्रथमन्दद्यान्मातॄणान्तदनन्तरन् ततोमातामहादीनाम-न्वष्टकाइतिक्रमः । तथाचप्रथमम्पित्रादित्रयाणां ततो मात्रा-दितिसृणाम् ततो मातामहादित्रयाणामेवं नवपुरुषश्राद्धम-न्वष्टकायाम्भवतीति भावः ॥

अथ गजच्छाया । कृष्णपक्षे त्रयोदश्यां मघायुक्तायां हस्तनक्षत्रगते सूर्य्ये गजछायाभवति । वायुपुराणे हस्तेसू-र्येस्थितेयातुमघायुक्तात्रयोदशीतिथिर्वैवस्वतीनामसाछायाकुञ्ज-रस्यतु । अन्यच्च कृष्णपक्षेत्रयोदश्याम्मघास्विन्दुःकरेरविः यदातदागजच्छायाश्राद्धेपुण्यमवाप्यते अत्रवारनियमोनास्ति प्रापकाभावात् । दिवसएवैतादृशयोगे गजछाया न तु रात्रौ तथाहि महाभारते । दिवैवयोगः शस्तोयन्नतुरात्रौकदाचन इति अत्रमधुघृतयुतपायसेनश्राद्धम् तथाहि सोस्माकञ्चकुले-जायाद्योनोदद्यात्त्रयोदशीम् पायसम्मधुसर्पिभ्यांम्वर्षासुचमघा-सुच । पितॄणांमुक्तिरियं ब्रह्मपुराणे अश्वयुज्यातुकृष्णायान्त्र-योदश्याम्मघासुच प्रावृड्ऋतौयमःप्रेतान्पितॄंश्चापियमालयात् विसर्ज्जयतिमानुष्येकृत्वाशून्यंस्वकम्पुरम् क्षुधार्त्ताःकीर्त्तयन्त-श्चदुष्कृतन्तुस्वयंकृतम् पायसम्पुत्रपौत्रेभ्यःकाङ्क्षन्तोमधुसंयुतं

तस्मात्तत्रविधानेनतर्प्पयेत्पायसेनच मध्वाज्यतिलमिश्रेणतथा-
शीतेनचाम्भसा ग्रासमात्रंपरगृहाद्रक्ष यःप्राप्नुयान्नरः भिक्षा-
मात्रेणयःप्राणान्सन्धारयतिवास्वयम् योवासम्वर्द्धयेद्देहंप्रत्यह-
ञ्चात्मविक्रयात् श्राद्धन्तेनापिकर्त्तव्यन्तैस्तैर्द्रव्यैःसुसञ्चितैः
नास्मात्परतरःकालःश्राद्धेष्वन्यत्नविद्यते यत्रसाक्षाद्धिपितरोगृ-
ह्णन्त्यमृतमक्षयम्। ज्येष्टपुत्रवतापिण्डरहितमेवश्राद्धमत्रकर्त्त-
व्यम्। मघायांपिण्डदानेनज्येष्ठःपुत्रोविनश्यति इत्यनिष्ठश्रव-
णात् ज्येष्ठपदमत्रसर्वज्येष्टपरमिति रसमाला। अत्रमघाधिक-
रणके श्राद्धमात्रेण पिण्डदाननिषेधः सपिण्डनदिनेमघास-
त्वेसपिण्डनपर्य्युदासापत्तेःकिन्तुमघानिमित्तके। तथात्त्र-
मघापुरस्कारेणपार्वणंज्येष्ठपुत्रिणाम्पिण्डरहितंकर्त्तव्यमिति-
शास्त्रार्थ इति कृत्यमहार्णवः। ब्रह्मपुराणे सूतकेमृतकेचैवग्रस्त-
योश्चन्द्रसूर्ययोः इछायायांकुञ्जरस्याथभुक्त्वातुनरकंव्रजेत् प्रमा-
दाद्ब्राह्मणोभुक्त्वाचरेच्चान्द्रायणंव्रतम् एतेन ब्राह्मणस्य तत्र
भोजने चान्द्रायणं क्षत्रियादीनाम्पादपादहीनंतत्तदेव विप्रेतु-
सकलंदेयंपादोनंक्षत्रियेमतमिति वृहद्विष्णुवचनात्। विशेषतो
ब्राह्मणस्यैवोपादानाद्ब्राह्मणस्यैव प्रायश्चित्तमिति कश्चित्। चा-
न्द्रायणप्रकारोमत्कृतप्रायश्चित्तव्यवस्थायामवलोकनीयम्॥

अथ श्राद्धकालः। शुक्लपक्षस्यपार्वणम्पूर्वाह्णे कृष्णपक्षस्य-
चापराह्णे तथा च मार्कण्डेयः शुक्लपक्षस्यपूर्वाह्णेश्राद्धंकुर्य्या-
द्विचक्षणः कृष्णपक्षेऽपराह्णेचरौहिणन्नतुलङ्घयेदिति तिथित-
त्त्वचिन्तामणौ अक्षयतृतीयाप्रकरणेरौहिणमित्येकोद्दिष्टपर-
मिति श्राद्धरत्ने लक्ष्मीपतिः॥

अथ श्राद्धकालमाह । पूर्वान्हेमातृकंश्राद्धमपरान्हेतुपैतृकम् एकोद्दिष्टन्तुमध्यान्हेप्रातर्वृद्धिनिमित्तकम् पूर्वाह्णइति सार्द्धप्रहरयावत्तच्चगोपूजाप्रकरणेवक्ष्यते मातृकमन्नष्टकापैतृकम्पार्वणम् एकोद्दिष्टमाद्यश्राद्धादीति श्राद्धरत्ने लक्ष्मीपतिः मध्यान्हेकुतुपे । कुतुपकालमाह द्वौयामौघटिकान्यूनौद्वौयामौघटिकाधिकौ सकालःकुतुपोज्ञेयःपितृणांदत्तमक्षयम् । विशेषमाह रत्नमालायाम् दिनस्ययः पञ्चदशोविभागोरात्रेस्तथातद्धिमहूर्तमानमिति तथा च दिनमानस्य पञ्चदशमो विभागो दिनमुहूर्तंएवं रात्रावपीत्यर्थः तत्राष्टमोमुहूर्तःकुतुपःनवमोरौहिणः अन्येमुहूर्त्ताविख्यातादशपञ्चचसर्वदा तत्राष्टमोमुहूर्त्तोयःसकालःकुतुपःस्मृतः प्रातःकालादिमाह प्रातःकालेमुहूर्त्तांस्त्रीन्सङ्करस्तावदेवहि मध्यान्हस्त्रिमुहूर्त्तःस्यादपराह्णस्ततःपरम् सायान्हास्त्रिमुहूर्त्तस्स्याच्छ्राद्धंतत्रनकारयेत् ततःपरमिति मुहूर्त्तत्रयमिति शेषः । उभयदिने कुतुपालाभे अथवा पूर्वदिनेरौहिणस्योत्तरदिने कुतुपस्तस्योभयत्र पूर्वदिनेएवैकोद्दिष्टविहितत्वाविशेषात् कपालाधिकरणन्यायात् । यदिचकुतुपमुहूर्त्ते एकस्मिन्नापिदिने क्षयतिथिर्न लभ्यते तदा रौहिणे श्राद्धं रौहिण मुल्लंघ्यं न कर्तव्यम् रौहिणन्तुनलङ्घयेदिति वचनादिति ॥

अथ हस्तार्केखञ्जनदर्शनम् तत्रदर्शनमन्त्रौ नीलकण्ठशुभग्रीवसर्वकामफलप्रद पृथिव्यामवतीर्णोसिखञ्जरीटनमोस्तुते त्वंयोगयुक्तोमुनिपुत्रकस्त्वमदृश्यतामेषिशिखोद्गमेन संदृश्यसेप्रावृषिनिर्गतायां त्वत्खञ्जनाश्चर्यनमोनमस्ते । दर्शनफलमाह ति

थितत्वे अब्जेषुगोषुगजवाजिमदोरगेषुराज्यप्रदःकुशलदःशुचि-
शाद्वलेषु भस्मास्थिकेशनुषलोमनखेषुदृष्टोदुःखंददातिबहुशः
खलुखञ्जरीटः वित्तंब्रह्मणिकार्य्यसिद्धिरतुलाशक्रेहुताशोभयम्
याम्यामग्निभयंसुरारिकलहौलाभस्समुद्रालये वायव्यांवरमन्न-
वस्त्रविभवंदिव्याङ्गनाचोत्तरे ऐशान्यांमरणंध्रुवन्निगदितन्दिग्ल
क्षणं खञ्जने ब्रह्मणि आकाशे खम्ब्रह्मेतिश्रुतेः शक्रे पूर्वदिशि
दर्शन इतिशेषः हुताशेऽग्निकोणे याम्यां दक्षिणे सुरद्विषि
नैर्ऋत्यकोणे समुद्रालये पश्चिमे ॥

अथ आश्विनशुक्लप्रतिपदिकलशस्थापनम् तच्च पूर्वान्हे-
उभयदिने पूर्वान्हे प्रतिपल्लाभे द्वितीयायुतायामेवतत्कार्यम्
नत्वमावास्यायुक्तायां प्रतिपदि तथाहि देवीपुराणे योमांपूज-
यते भक्त्याद्वितीयायांगुणान्विताम् प्रतिपच्छारदीम्पुजांसोऽश्नु-
तेसुखमव्ययम् यदिकुर्यादमायुक्ताप्रतिपत्स्थापनंमम तस्मैशा-
पायुतंदत्वातस्यशोषङ्करोम्यहम् आग्रहात्कुरुतेयस्तुकलशस्थाप-
नम्मम तस्यसम्पद्विनाशस्स्याज्ज्येष्ठः पुत्रोविनश्यति द्वितीयायां-
द्वितीयायुतायाम् अमा अमावास्या । तिथितत्त्वचिन्तामणौ
अमायुक्तानकर्त्तव्याप्रतिपच्चण्डिकार्चने मुहूर्त्तमात्राकर्त्तव्या-
द्वितीयायांगुणान्विता इति द्वितीयायां द्वितीयायुक्तायां मुहूर्त्त-
मात्रा मुहूर्त्तान्न्यूना तत्रैव परदिने प्रतिपदोऽत्यन्तासत्त्वे दर्श-
युक्ता पूर्वैव ग्राह्या इतिठक्कुराः अत्यन्तासत्वमुहूर्त्तानत्वम् मुहू-
र्त्त पर्यन्तमपि उत्तरदिने प्रतिपल्लाभे उत्तरदिने एव कार्यम्
पूजा तत्र सङ्क्षेपतोपि कार्य्या सम्यक्कल्पोदितापूजायदिक-
र्त्तुं न्नशक्यते इत्यादिसङ्क्षेपपूजाकथितेत्यन्तकालिकापुराणात्

तिथिमलेतुनकार्यम् । षष्टिदण्डात्मिकायाश्चतिथेर्निःक्रमणेपरे अकर्मण्यं तिथिमलंविद्यादेकादशीन्त्रिनेति वचनात् परे परदिने निःक्रमणे तथा च पूर्वंदिने षष्टिदण्डात्मिकाभूत्वा परदिने सैव तिथिः किञ्चिद्दण्डात्मिका सैवद्वितीयदिने तिथिमलत्वा-त्याज्येति भावः द्वितीयायोगनिषेधकानि यानि यानि वचना-नि तानि तानि मुहूर्त्तन्यूनप्रतिपद्विषयानि तिथिमलप्रतिपद्वि-षयानि च बोध्यानि मुहूर्त्तन्तु दिनमानस्य पञ्चदशमोभाग इ-त्युक्तम्प्राक् ॥

अथ चण्डीपाठफलमाह । वाराहीतन्त्रे ईश्वरउवाच चण्डी-पाठफलंदेविशृणुष्वगदतोमम ग्रहोपशान्त्यैकर्तव्यं पञ्चावृत्तं वरानने महाभयेसमुत्पन्नेसप्तावृत्तमुदीरयेत् अङ्कावृत्तेकाम्य-सिद्धिर्वैरिहानिश्चजायते मन्वावृत्त्यारिपुर्वश्यस्तथास्त्रीवश्यता-मियात् सौख्यं पञ्चदशावृत्ताच्छ्रेयमाप्नोतिमानवः कलावृत्ता त्पुत्रपौत्रधनधान्यादिकम्विदुः राज्ञांभीतिविमोक्षायवैरस्योच्चा-टनायच कुर्य्यात्सप्तदशावृत्तं तथाद्वादशकंप्रिये महाव्रणविमो-क्षायविंशावृत्तं पठेन्नरः पञ्चविंशावर्त्तनाच्चभवेद्बन्धविमोक्षणम् सङ्कटेसमनुप्राप्तेदुश्चिकित्सामयेतथा जातिध्वंसेकुलच्छेदेआ-युषोनाशआगते वैरिवृद्धौव्याधिवृद्धौधननाशेतथाक्षये तथैव-त्रिविधोत्पातेतथाचैवातिपातके कुर्य्याद्यत्नाच्छतावृत्तन्ततस्स-म्पद्यतेशुभम् श्रियोवृद्धिश्शतावृत्ताद्राज्यवृद्धिस्तथाप्रिये मन-साचिन्तितन्देविसिद्धेदष्टोत्तराच्छतात् शताश्वमेधयज्ञानां फल माप्नोति सुव्रते सहस्रावर्तनाल्लक्ष्मीरावृणोतिस्वयंस्थिरा भु-क्त्वामनोरथान् सर्वान्नरोमोक्षमवाप्नुयात् तथाश्वमेधःक्रतुरा-

द्देवानां चयथाहरिः स्तवानामपिसर्वेषां तथासप्तशतीस्तवः अथवाबहुनोक्तेनकिमेतेनवरानने चण्ड्याःशतावृत्तिपाठात्सर्वाःसिद्ध्यन्तिसिद्धय इति अत्रपठनं श्रवणं वा पाठनश्रावणकार्यं प्रयोजयिता अनुमन्ता कर्त्ता चेति सर्वे स्वर्गनरकभौक्तारो यो भूय आरभते तस्मिन्फलेविशेष इत्यापस्तंवेनाप्रवृत्तप्रवर्त्तकलक्षणप्रयोजकस्यापि फलश्रुतिरिति तिथितत्वे स्मार्ताः द्विजनां पठनश्रवणयोश्शूद्रस्य श्रवणमात्रेऽधिकार इत्यपि तत्रैवेति । तिथितत्त्वच्चिन्तामणौ प्रतिपदादिनवम्यन्तम्पाठक्रमस्त्वयम् स्वयञ्चलिखितम्यच्चशूद्रेणलिखितम्भवेत् आब्राह्मणेनलिखितन्तच्चापिविफलम्भवेदिति ॥

अथ सप्तमीनिर्णयः । उपवासादौ सप्तमी उदयकालिनी ग्राह्या न तु युग्मवाक्यात्पूर्वा युगाद्यावर्षवृद्धिश्चसप्तमोपार्वती-प्रिया रवेरुदयमोक्षन्तेनतत्रतिथियुग्मता इति कृत्यतत्त्वोक्तेः । भगवत्याः प्रवेशादिविसर्गान्ताश्चयाःक्रियाः तिथावुदयगामिन्यांसर्वास्ताः कारयेद्बुध इति तिथितत्त्वोक्तेश्च दुर्गाभक्तितरङ्गिण्याङ्घटिकातोन्यूनापरानकार्य्या व्रतोपवासनियमेघटिकैकायदाभवेत् इतिदेवलोक्तेः पत्रिकांनवपत्रिकापूजापूर्वाह्णे एव न तु मूलानुरोधान्मध्याह्नादाविति कृत्यतत्त्वोक्तेः ॥

अथ महाष्टमीनिर्णयः । महाष्टमीव्रतेऽष्टमी नवमीयुताग्राह्या । अष्टमीनवमीयुक्तानवमीचाष्टमीयुता इति पाद्मोक्तेः । शरन्महाष्टमीपूज्यानवमीसंयुतासदा सप्तमीसंयुतानित्यंशोकसन्तापकारिणीजम्भेनसप्तमीविद्धापूजितातुमहाष्टमी इन्द्रेणनिहतोजम्भस्तस्माद्दानवपुङ्गव इतिस्मृतिसंग्रहोक्तेश्च ॥

अथ नवमी तु व्रतादौ पूर्वविद्धा ग्राह्या अष्टमीनवमीयुक्ता नवमीचाष्टमीयुतेति पाद्मोक्तेः युग्माग्निकृतुभूतानिषङ्मुन्योर्वसुरन्ध्रयोः इति निगमवचनाच्च । देवीपुराणे भूमीशयोस्तु चामन्त्र्यकुमारीम्पूजयेन्मुदा वस्त्रालङ्कारदानैश्चसन्तोष्याप्रतिवासरम् बलिंचप्रत्यहन्दद्यादोदनंमांससंयुतमित्यादि ॥

अथ विजयादशमी । दशम्यामपराजिता पूजा देवीविसर्जनादि उदयगामिन्यान्दशम्यामेकादशीयुतायामेव तथाहि नन्दिकेश्वरे प्रातरावाहयेद्देवीं प्रातरेवविसर्ज्जयेत् ततः प्रातश्चसम्पूज्यप्रातरेवविसर्ज्जयेत् प्रातरितिमुहूर्त्तान्न्यूनकाल इति शेषः । रत्नकोषे नारदः इषस्यदशमींशुक्लांपूर्वविद्धान्नकारयेत् श्रवणेनापि संयुक्तांराज्ञांपट्टाभिषेचने सूर्योदयेयदाराजन्दृश्यतेदशमीतिथिः आश्विनेमासिशुक्ले तु विजयान्तांविदुर्बुधाः । नन्दिकेश्वरेभगवत्याःप्रवेशादिविसर्गान्ताश्चयाःक्रिया इत्यादि । तत्रापि सम्यक्पूजाद्ययोग्यमुहूर्त्तान्न्यूनादशमीप्राप्तावाह कालिकापुराणे सम्यक्कल्पोदितापूजायदिकर्त्तुन्नशक्यते उपचारांस्तथादत्तं पञ्चैतान्वितरेत्तदा गन्धम्पुष्पंचधूपञ्चनैवेद्यं दीपमेव च अभावेपुष्पतोयाभ्यांतदभावेतुभक्तितः संक्षेपपूजाकथितातथाशास्त्रादिकंपुनः तथा चोदयगामिन्यां मुहूर्त्तान्न्यूनायामल्पकालव्यापिन्यामप्येकादशीयुतायामेव संक्षेपपूजादिभिरपि विसर्ज्जनं कार्य्यमिति भावः । दिनमानस्यपञ्चदशमो भागो मुहूर्त्तमित्यनुपदमेवाभिहितम् प्राग्मुहूर्त्तंन्यूनदशम्या उत्तरदिने उदयगामिन्यालाभे तु नवमीयुतायामेवापराजिता पूजा विसर्जनञ्च तथाहि शिवरहस्ये आश्विनेशुक्लपक्षेतुदश-

म्यांपूजयेत्ततः एकादश्यांनकुर्वीतपूजनंचापराजितमिति एका-
दश्यां एकादशीयुतायां पूजनमत्र विसर्ज्जनस्याप्युपलक्षणम्
एतद्वचनस्योत्तरदिने मुहूर्त्तन्यूनदशमीलाभे उत्तरदिनकर्तव्य-
तानिषेधकत्वेनैवस्मार्तादिभिस्तिथितत्वादिग्रन्थे व्याख्यात-
त्वात्तद्दशार्थपर्य्यवसानमिति श्रवणेनविसर्ज्जयेदिति श्रवणायो-
गस्तुरोहिणीयोगवदप्रयोजक इतिठक्कुराः तेन श्रवणायोगोवि-
सर्ज्जनेनावश्यकः श्रवणेनविसर्ज्जयेदितिवचनस्य श्रवणाप्रशंस
कत्वं प्रतीमः अत्र सर्वत्र नक्षत्रादरान्मुख्यस्तदभावेतिथिरेव-
ग्राह्या युग्मात् तिथिश्शरीरन्देवस्यतिथौनक्षत्रमाश्रितम् तस्मा
त्तिथिम्प्रशंसन्तिनक्षत्रन्नतिथिम्विनेति विद्यापतिठक्कुराः ॥

अथ यात्राविजयदशमी। यात्रांकृत्वासीमानंलङ्घयेत् त-
थाहि व्रतकाण्डे तु काश्यपः श्रवणर्क्षेतुपूर्णायांकाकुस्थःप्रस्थि-
तोयतः उल्लङ्घयेत्स्वसीमांतं तद्दिनर्क्षेततोनराः ॥

अथ शमीग्रहणम्। पूर्णायांदशम्यांशमीमर्चयित्वायात्रा-
करणम्। तत्रमन्त्रःशमीशमयतेपापंशमीलोहितकंटिका धा-
रिण्यर्ज्जुनबाणानां रामस्यप्रियदायिनी करिष्यमाणायायात्रा-
यथाकालंसुखम्मया तत्रनिर्विघ्नकर्त्त्रीत्वं भवश्रीरामपूजिते श-
मीवृक्षविशेषः लोहितकण्टकयुक्तः प्रागुक्तवचनलिङ्गात् गृही-
त्वासाक्षतांमालांशमीमूलगताम्भृशम् गीतवादित्रनिर्घोषैरानयें-
त्स्वगृहम्प्रति ततोभूषणवस्त्रादिधारयेत्स्वजनैःसह ॥

अथ कोजागरा। तिथितत्त्वे कौमुद्याम्पूजयेल्लक्ष्मीमिन्द्र-
मैरावतस्थितम् सुगन्धैर्न्निशिसंवेशैश्चाक्षैर्जागरणंचरेत् तथा
निशीथेवरदालक्ष्मीः कोजागर्त्तीतिभाषिणी तस्मैवित्तंप्रदास्या-

मिअक्षैः क्रीडांकरोतियः अत्रनिशीथ इत्यभिधानाद्रात्रिकृत्य-मिदम् यद्दिने प्रदोषनिशीथे व्यापिनी पूर्णा तद्दिने कोजागरा कृत्यम् उभयव्याप्त्यनुरोधात् यदा तु पूर्वदिने निशीथव्याप्तिः परेद्युर्नप्रदोषव्याप्तिस्तदा सुतरां पूर्वदिने तत्कृत्यमिति ।

अथ कार्तिककृत्यम् । वायुपुराणे तुलामकरमेषेषुप्रातः स्नानम्विधीयते हविष्यंब्रह्मचर्य्यञ्चमहापातकनाशनम् अत्र सौरमासक्रमोबोध्य इतिठक्कुराः तथाहि दुर्लभःकार्तिकोमासो-मथुरायांनृणामिह यत्रार्चितोहरीरूपंभक्ते भ्यःस्वंप्रयच्छति कार्तिकस्नानमन्त्रस्तु कार्तिकेहङ्करिष्यामिप्रातःस्नानंजनार्दन प्रीत्यर्थन्तवदेवेशदामोदरमयासह मयालक्ष्म्या । पद्मपुराणे धात्रीछायांसुयः कुर्य्यात्पिण्डदानम्महामुने मुक्तिम्प्रयान्तिपितरः प्रसादान्माधवस्यच धात्रीफलविलिप्ताङ्गोधात्रीफलविभूषितः धात्रीफलकृताहारोनरोनारायणोभवेत् धात्रीछायांसमाश्रित्ययोर्च्चयेच्चक्रपाणिकम् पुष्पेपुष्पेऽश्वमेधस्य फलम्प्राप्नोतिमानवः । नारदीये एकान्तरोपवासोवात्रिरात्रोपोषितोपिवा षड्वाद्वादशपक्षम्वामोसंवावरवर्णिनि एकभुक्तननक्ते नतथैवायाचितेन च उपवासेनमोक्षेणव्रजतेपरम्पदम् ॥

अथ हविष्यविचारः । हविष्यान्याह भविष्ये हैमन्तिकं सितास्विन्नंधान्यमुद्गास्तिलंयवा कलापकङ्कुनीवारावास्तुकं-हिलमोचिको षाष्टिकाफलशाकंचमूलकं केम्वुकेतरत्कन्दं सैन्धवसामुद्रे गव्येचदधिसर्पिषी पयोनुद्धृतसारंचपनसाम्रहरीतकी पिप्पलीजीरकञ्चैवनागरङ्गञ्चतिन्तिली कदलीनवलीधात्रीफलान्यगुडमैक्षुरम् अतैलपक्वंमुनयोहविष्यान्नंप्रचक्षते हैं-

मन्तिकम्मार्गपौषोत्पन्नन्धान्यन्तस्यैवविशेषम् सितास्विन्नमि-ति सितं श्वेताश्विन्नम् उसिनो इतिप्रसिद्धम् तद्भिन्नमस्विन्नम् कङ्कुः काउनि इति प्रसिद्धा नीवार ओइरो इति षष्टिकाशाठी इति प्रसिद्धा मूलकमित्यस्य विशेषणं केम्बुकेतरत् इति केम्बुकम् केउआ इति प्रसिद्धा तद्भिन्नं सैन्धवसामुद्रे इति लवणे इति शेषः अगुडमिति ऐक्षुरस्य विशेषणम् इक्षुसम्ब-न्धिषु गुडभिन्नं सिताशर्करादिकं सर्वमेवहविष्यमित्यर्थः ॥

अथ आमिषविचारः । आमिषान्याह पाद्मे प्रान्यङ्कु-चूर्णं चर्म्माम्बुजम्बीरंबीजपूरकं अयज्ञशिष्टंमाषादियद्विष्णोर-निवेदितं दग्धमन्नं मसूरश्चमाषश्चेत्यष्टधामिषम् गोछागीमहि-षीदुग्धादन्यदुग्धन्तुआमिषम् धान्येमसूरिकाप्रोक्ताअन्नं पर्यु-षितं तथा द्विजक्रीतारसाः सर्वेलवणंभूमिजन्तथा ताम्रपात्र-स्थितंगव्यञ्जलंपल्वलसंस्थितम् आत्मार्थम्पचितञ्चान्नमामिष-न्तत्स्मृतंबुधैः प्रान्यङ्कुचूर्णम् । शुक्तिकादिचूर्णम् ॥

अथामावस्यादिकृत्यम् । वनस्पतिगतेसोमेऽनड्वाहौयस्तु-वाहयेत् नाश्नन्तिपितरस्तस्यदशवर्षाणिपञ्चच इतिवचनाद-मावास्यायां वृषवाहने महादोषः तस्येति पिण्डादिकमिति शेषः । स्मृतिः येयंदीपान्विताराजन्ख्यातापञ्चदशीभुविः त-स्यान्देयन्नचेद्दत्तंपितृणान्तुमहालये इति दीपान्वितापञ्चदशी अमावास्यापितॄणांमहालये पितृपक्षे महालये तथाच पितृपक्षे-येनश्राद्धन्नकृतन्तेनात्रश्राद्धकर्तव्यमितितात्पर्यम् । अन्यच्च कन्यागतेसवितरिपितृराजानुशासनात्तावत्प्रेतपुरीशून्यायावद्-वृश्चिकदर्शनम् ततोवृश्चिकआयातेनिराशाः पितरोगताः पुनः

स्वभवनंयान्तिशापन्दत्वासुदारुणमिति तथाचामावास्यायाम-
प्यकृते श्राद्धे पितरो निराशाः सन्तः शापन्दत्वायान्तीत्यतो-
ऽवश्यमेव पार्वणमपरपक्षेयेंननकृतन्तेनावकर्त्तव्यमिति भावः॥

अथ उल्काभ्रमणम् । स्कान्दे ततःप्रदोषसमयेदीपान्दद्या
न्मनोरमान् ब्रह्मविष्णुशिवादीनाम्भवनेषुमठेषुचेति ज्योतिषे तु-
लासंस्थे सहस्रांशौप्रदोषेभूतदर्शयउल्काहस्तानराःकुर्य्युः पि
तृणाम्मार्गदर्शनम् एतेन प्रदोषव्यापिन्याममावास्यायामुल्का-
भ्रमणमिति तात्पर्यम् उभयदिने प्रदोषव्यापिन्याअमावास्या-
या अलाभे लाभे च परदिने एव दण्डैकरजनीयोगे दर्शःस्याच्चा
परेहनि तदाविहायपूर्वेद्युःपरेह्निसुखरात्रिकेति ज्योतिर्वचना-
त् भूताहेयेप्रकुर्वन्तिउल्काग्रहमचेतना निराशाःपितरोयान्ति-
शापन्दत्वासुदारुणमिति वचनाच्च । उत्तरदिने प्रदोषे दर्शा-
भावे पूर्वदिने एव कर्म्मकालस्यमुख्यत्वात् । तुलासंस्थेसहस्रां
शावितिप्रागुक्तज्योतिर्वचनाच्च । भूताहेयेप्रकुर्वन्तीत्यादिवच-
नस्योभयदिने प्रदोषेऽमावास्यालाभेऽलाभेच पूर्वदिनेकर्तव्य-
तानिषेधकत्वं तिथितत्त्वे स्मार्तोप्येवम् । उल्काग्रहणमन्त्रस्तु
शस्त्राशस्त्रहतानांचभूतानां भूतदर्शयोः उज्ज्वलज्योतिषादेहंनि
र्दहेव्योमवन्हिना । भ्रमणमन्त्रस्तु अग्निदग्धाश्चये जीवायेप्यद-
ग्धाःकुलेमम उज्ज्वलज्योतिषादग्धास्तेयान्तुपरमांगतिमिति ॥

अथ विसर्ज्जनमन्त्रस्तु ब्रह्मपुराणे यमलोकम्परित्यज्य आ-
गतायेमहालये उज्ज्वलज्योतिषावर्त्मप्रपश्यन्तीव्रजन्तु ते इति॥

अथ दीपमालिकादानफलमाह । यःकुर्य्यात्कार्तिकेमासे-
शोभनांदीपमालिकाम् घृतेनचचतुर्दश्याममायांचविशेषतः या-

वद्दीपप्रसंख्यातुघृतेनापूर्यरोधिता तावद्युगसहस्त्राणिस्वर्गलोकेमहीयते ॥

अथ गोक्रीडादौप्रतिपदमावास्यायुतैवग्राह्या । तथाहि- नारदः याकुहूःप्रतिपन्मिश्रातत्रगाः पूजयेन्नृप पूजनात्त्रीणि- वर्द्धन्तिप्रजागावोमहीपतिः । स्मृतिरपि शिवाचशिवदुर्गाचदु- र्भगाचहुताशनी गोपूजाचवटच्छायाकर्तव्याप्रथमेदिने । देव- लोपि प्रतिपद्दर्शसंयोगेगवांवैक्रीडनम्भवेत् परविद्धासुकरणा- त्पुत्रदारधनक्षय इति । स एव प्रतिपद्यग्निकरणंद्वितियायांग- वार्चनम् क्षलक्षयंकरिष्येतेवित्तनाशंकुलक्षयमिति नारदोपि- भद्रायांगोकुलक्रीडासदेशोवैविनश्यति इति भद्रायांद्वितीया- युतांयाम्एतच्च द्वितीयदिने चन्द्रदर्शनसम्भावनायाम् अत एव पुराणसमुच्चयेपि गवांक्रीडादिनेयत्ररात्रौदृश्येतचन्द्रमाः सोमोराजापशून्हन्तिसुरभीपूजकांस्तथा इति । प्रतिपदुत्तरं सूर्यास्तमनकालपर्यन्तं मुहूर्त्तान्न्यूना यदि द्वितीया तदा चन्द्रदर्शनसम्भावना सर्वसम्मता अत्र यदि प्रतिपदि षण्मुहू- र्तव्यापिनी द्वितीया तत्र चन्द्रदर्शनसम्भावना गोक्रीडनं न कार्यमिति तिथिनिर्णयः । ठक्कुरैरपियाकुहूरित्यादिपूर्ववचना- न्यभिधाय एतेविधिप्रतिषेधाः पूर्वदिने प्रतिपदः सायान्हव्या- पित्वे द्वितीयदिने चन्द्रदर्शनसम्भवे च ज्ञेया । दिनद्वयेसाया- न्हव्यापित्वे परैवग्राह्येत्यभिहितम् एवं च द्वितीयदिनेषण्मु- हूर्तन्यूनैव द्वितीया तदा चन्द्रदर्शनसम्भावनाया अभावात् द्वितीयायुतैव ग्राह्या तत्रैव पुराणसमुच्चयः वर्द्धमानतिथौनन्दा- यदासार्द्धत्रियामिका द्वितीयावृद्धगामित्वादुत्तरातत्रबोधयत्

इति । चन्द्रादर्शने तु द्वितीयायुतैव ग्राह्येति तिथिनिर्णयः सायान्हेहोलिकांकुर्य्यात्पूर्वान्हेक्रीडनङ्गवामिति पूर्वान्हः सार्द्धप्रहरंयावत् तथाहि । तिथिचन्द्रिकायां । पूर्वान्हः प्रहरं-सार्द्धं मध्यान्हःप्रहरन्तथा । तत्तृतीयोपरान्हः स्यात्सायान्हश्च ततः परमिति । कुहूःप्रतिपद्युतायत्रगावस्तत्रनपूजयेदित्यादि स्मृतयोपि । द्वितीयायाःषण्मुहूर्त्तान्न्यूनत्वे पूर्वयुक्तायाः कर्त-व्यतानिषेधकत्वे न व्याख्येया इति सर्वंसुस्थम् । विशाखा-यांगोपूजानिषेधमाह राजमार्तण्डे विशाखायाममावास्याविशा-खाप्रतिपद्युता आयुः पुत्रं धनंहन्तिसुरभीपूजकांस्तथा सुर-भीगौः ॥

अथ कार्तिकशुक्लद्वितीयायमद्वितीयाख्या तस्यां कर्तव्यं स्कन्दपुराणे कार्तिकेशुक्लपक्षेतुद्वितीयायांयुधिष्ठिर यमोयमुन-यापूर्वम्भाजितःस्वगृहेर्च्चितःअतोयमद्वितीयेयंत्रिषुलोकेषुविश्रुता अस्यान्निजगृहेविप्रभोक्तव्यन्नततोनरैः स्नेहेनभगिनीहस्ताद्भो-क्तव्यंपुष्टिवर्द्धनम् वस्त्रालङ्करणादीनिताभ्योदेयानियत्नतः । भगिन्यापठनीयोमन्त्रो यथा भ्रातस्तवानुजाताहम्भुंक्ष्वभक्त-मिदंशुभम्प्रीतये यमराजस्ययमुनायाविशेषतः । ज्येष्ठभगिन्या-स्तु भ्रातर्ज्येष्ठानुजाताहमिति शेषः तत्र हे भ्रातरनुजातावाज्ये-ष्ठाहमित्यन्वयः । ब्रह्माण्डपुराणे यातुभोजयतेनारीभ्रातरंयुग्म-केतिथौ अर्चयेच्चापिताम्बूलैर्नसावैधव्यमाप्नुयात् भ्रातुरायुः क्षयोराजन्नभवेत्तत्रकर्हिचित् युग्मके द्वितीयातिथौ । यमद्वि-तीयाप्रतिपद्युताग्राह्येति निर्णयामृतः । हेमाद्रौतुद्वितीयाम-ध्यान्हव्यापिनीपूर्वविद्धाचेतिविशेषः ॥

अथात्वन्नित्रगुप्तपूजनमाह गौडः यमञ्चचित्रगुप्तञ्चयमदूतांश्च पूजयेत् अर्घश्चात्रप्रदातव्योयमायसहजद्वयैः इयम्पूजा-अपरान्हे आह स्कान्दे ऊर्ज्जशुक्लद्वितोयायामपरान्हेऽर्घयेद्यमम् स्नानंकृत्वाभानुजायांयमलोकंनपश्यति भानुजायांयमुनायाम्। व्रतादौदिवैवभुक्तम् तथाहि तिथिचन्द्रिकायाम् दिनार्द्धसमयेतीतेभुज्यतेनियमेनयत् एकभुक्तमितिप्रोक्तंम तंस्यात्तद्दिवैवहि॥

अथ एकादशोनिर्णयः। एकादशीद्वादशीयुतैवग्राह्या रुद्रेणद्वादशीयुक्तेतिनिगमात् तिथिमलरूपाया अपिद्वादशीयुक्तायाः प्राप्तौसैवग्राह्या। षष्टिदण्डात्मिकायाश्चतिथेर्निःक्रमणेपरे अकर्म्मण्यन्तिथिमलम्विद्यादेकादशींविनेतिवचनात्। दशमीयुक्तायाग्रहणेदोषमाह स्मृतिः एकादशीदशाविद्धागान्धार्य्यासमुपोषिता तस्याः पुत्रशतन्नष्टंतस्मात्ताम्परिवर्जयेदिति एतच्चोभयदिनेएकादशीलाभे यदितुदशमीमात्रयुतैवसान्नद्वादशोयुता तदादशमीयुता कर्तव्या तथाहि स्मृतिः एकादशीनलभ्येतसकलांद्वादशीभवेत् उपोष्यादशमीविद्धाऋषिरुद्दालकोब्रवीत् नलभ्येतेतिद्वादशोयुक्तेतिशेषः। द्वैतनिर्णयेद्वैतपरिशिष्टेव्रतपद्धति पक्षधरीयतिथिचन्द्रिकादिमैथिलग्रन्थेष्वथेतादृशस्थले दशमीयुतायामेव कर्तव्यत्वं सिद्धान्तितं न तु द्वादशोव्रतमिति। त्र्यहस्पर्शमाह स्मृतिः एकादशीद्वादशीचरात्रिशेषेत्रयोदशो त्र्यहस्पृक्तदहोरात्रन्तत्रसाहस्रिकं फलमिति साहस्रिकं सहस्रगुणम्। हरिशयनादौ फलादिभक्षणनिषेधमाह भगवान् मच्छयनेमदुत्थानेमत्पार्श्वपरिवर्त्तने फलमूलपयोहारीहृदिशल्यंममार्पति। मच्छयनेहरिशयने [illegible]

देवोत्थाने पार्श्वपरिवर्त्तने भाद्रशुक्लैकादश्याम् । स्मृतिः एकादश्यान्नभुंजीतपक्षयोरुभयोरपि सूतकेमृतकेचैवअन्यस्मिन्नप्यशौचके सर्वथानपरित्याज्याइच्छताश्रेयआत्मनः । अशक्तौत्वाह वायुपुराणे फलं मूलम्पयस्तोयमुपभोग्यम्भवेच्छुभम् नत्वेवंभोजनङ्कैश्चिदेकादश्याम्प्रकीर्तितम् । प्रमादादितो व्रताकरणे व्रतभङ्गाभावमाह छागलेयः सर्वभूतभयंव्याधिःप्रमादोगुरुशासनम् अव्रतघ्नानिकीर्त्यन्तेसकृदेतानिशास्त्रतः प्रमादोविस्मरणम् सकृदेकवारम् वारम्बारं तद्धेतुभिरकरणे भङ्ग एव सकृदित्युक्तेः स्मृतिः एकादशीदिनेयत्नभार्य्याश्चर्तुमतीभवेत् पितृश्राद्धंचतत्रैवउपायस्तत्रकथ्यते । एकादशीव्रतंकुर्य्यात्पिण्डाघ्राणञ्चश्राद्धकृत् अर्द्धरात्रेव्यतीतेतुऋतुन्दद्यान्नदोषभाक्॥ ब्रह्मपुराणेएकादश्यान्तुशुक्लायां कार्त्तिके मासिकेशवम् सुप्तं प्रबोधयेद्रात्रौभक्ति श्रद्धासमन्वितइति ॥

अथ विष्णूत्थापनमन्त्राः । ब्रह्मेन्द्ररुद्रै रभिवन्द्यमानोभवानृषिर्वन्दितवन्दनीयः प्राप्तातवेयङ्किलकौमुदाख्याजागृष्वजागृष्वचलोकनाथ १ मेघागतानिर्मलपूर्णचन्द्रशारद्यपुष्पाणिमनोहराणि अहन्ददानीतिचपुण्यहेतोर्जागृष्वजागृष्वचलोकनाथ२ उत्तिष्ठोत्तिष्ठगोविन्दत्यजनिद्रांजगत्पते त्वयाचोत्थीयमानेन उत्थितम्भुवनत्रयम् ॥

अथ हरिवासरमाह मत्स्यपुराणे द्वादशीशुक्लपक्षेतुनभस्येश्रावणं यदि उपोष्यैकादशीन्तत्रद्वादशीमप्युपोषयेत् । ब्रह्माण्डे द्वादश्यान्तुदिनेभाद्रे हृषीकेशर्क्षसंयुते उपवासद्वयंकुर्य्याद्विष्णुप्रीडनतत्परः द्वादश्येकादशीसौम्यश्रवणांचचतुष्टयम् देवदु-

न्दुभियोगोयंशतमन्युफलप्रदः नभस्ये भाद्रे हृषोकेशर्क्षश्र-
वणसौम्यो छमः मन्युर्यज्ञः वराहपुराणे एकादशोमुपोष्यै-
वद्वादशोमप्युपोषयेत् नचात्रविधिलोपस्स्यादुभयोर्दैवताइति।
अत्रतिथिचन्द्रिकायां पारणान्तंव्रतंज्ञेयं समाप्तौद्विजभोजनमिति
समाप्तिश्चपारणेन तदभावेउपवासद्वये क्रियमाणेपूर्वव्रतस्य
समाप्तेर्विधिलोपः प्राप्नोतिसोप्येकदेवत्वेननविधिलोप इति
पक्षधरमिश्राः पठन्ति। आभाकासितपक्षे चमैत्रश्रवणरेवती
द्वादशीवुधवारेणहरेर्वासरउच्यते। तथाचाषाढशुक्लद्वादशीबु-
धवारानुराधायुता भाद्रशुक्लद्वादशीवुधश्रवणायुता कार्तिकशु-
क्लद्वादशीवुधरेवतीयुताहरिवासरइत्यर्थः पर्य्यवसितः॥

अथैकादशीपारणायां। मासभेदेनवस्तुभेदमाह गोमू-
त्रेण चगोमयेनपयसादध्नागवांसर्पिषा सदर्भोदककार्तवीर्य्यय-
वजैश्चूर्णैस्तथादूर्वया कुष्माण्डेनगुडेनबिल्वतुलसीपत्रेणवापा-
रणं द्वादश्यांगदितंक्रमान्मुनिवरैर्मार्गादितस्तत्फलम् पयसा
दुग्धेन कार्तवीर्य्यस्तिलः विल्वतुलसीपत्रयोर्विकल्पः मार्गा-
दिद्वादशमासेषुक्रमेणद्वादशवस्तुभिःपारणमिति। पद्मपुराणे
क्रियायोगे दशम्याञ्चिप्रशादूलद्वादश्याञ्चैववैष्णवः सम्यग्व्रत-
फलंप्रेप्सुर्नकुर्य्यान्निशिभोजनम्। दशम्यामेवमादोनिनिषि-
द्धानिद्विजोत्तम द्वादश्यामपितान्येवनिषिद्धानिनसंशयः तथा-
च दशमीविहितानि सर्वाण्येवमांसभक्षणाकरणादीनि द्वाद-
श्यामपि कुर्य्यादिति भावः॥ कार्त्तिकीपूर्णिमाकौशिकीस्नाने-
फलमाह। रामायणे। कृत्तिका ऋक्षसंयुक्ताराकाया कार्त्तिके-
भवेत् कोकामुखेतु कौशिक्यां स्नात्वास्वर्गेवसेन्नरः ओंअद्ये-

अथाग्रयणकृत्यम् । अथ नवान्नभक्षणञ्च । वृश्चिकत्रयोदशांशाभ्यन्तरेनवान्नभक्षणम् नवान्न श्राद्धंवृश्चिकेपूर्वभागेतुनवान्नंशस्यतेबुधैः अपरेक्रियमाणेतुधनुष्येवकृतम्भवेत् धनुष्युयत्कृतंश्राद्धंमृगनेत्रासुरात्रिषु पितरस्तन्नगृण्हन्तिनवान्नामृतकाङ्क्षिण इतिवचनात् पूर्वभागेत्रयोदशांशाभ्यन्तरे अपरे च चतुर्दशांशादौतत्राविहिततिथ्यादीन्याह ज्योतिषे सूर्येचैवविशाखगेस्मरतिथौतारेत्रिजन्मान्विते नन्दामन्दमहोजकाव्यदिवसे पौषमधौकार्तिके भेषूग्राहिशिवेषुविष्णुशयने कृष्येशशिन्यष्टमे श्राद्धंभोजनकन्नवान्नविहितं पुत्रार्थनाशप्रदम् स्मरतिथिः त्रयोदशी नन्दा प्रतिपत्षष्ठीएकादश्यः मन्दःशनिः महोजो मङ्गलः काव्यः शुक्रः मधौ चैत्रे भेषु नक्षत्रेषु उग्रः पूर्वात्रयमघाभरण्यः अहिः श्लेषा शिव आर्द्रा एतानि निषिद्धानि अत्र श्लेषाकृतिकाज्येष्ठामूलाजपदेषुच भृगुभौमदिनेरिक्तातिथौनाद्यान्नचौदनमिति श्राद्धशेषभोजिपरम् अजपदं पूर्वभाद्रपरमिति तिथितत्वे । विहितानि नक्षत्रादीन्याह भोजराजः ब्रह्माविष्णुबृहस्पतीशशधरोमार्तण्डपौष्णादिति मैत्रेचित्रविशाखवायुनभसेमूलाश्विवन्हौतथा शक्रे वारुणऋक्षकेशुभदिने श्राद्धंनवंशस्यते ब्रह्मारोहिणी विष्णुः श्रवणः बृहस्पतिः पुष्यः शशधरो मृगशिरा मार्तण्डो हस्तः पौष्णा रेवती अदितिः पुनर्वसू मैत्र अनुराधा चित्रं चित्रा अन्यच्च हरियुगलेदितियुगलेपूषायुगले विरञ्चियुगले करपञ्चकोत्तरेषुचनवान्नभक्षणंशस्तम् तथा च रोहिण्यादिद्वयम्पुनर्वस्वादिद्वयं उत्तरत्रयंहस्तादिपञ्चकं श्रवणात्रिकरेवत्यादिद्वयं एतान्निनक्षत्रा-

णिशुक्रशनिमङ्गलभिन्नवाराःनन्दारिक्तात्रयोदशीभिन्नतिथयः तृतीयजन्मभिन्नताराः अष्टमभिन्नचन्द्रमाः विशाखाभिन्ननक्षत्रस्थसूर्यः पौषचैत्रकार्तिकाभिन्नमासाः शुक्लपक्षः हरिशयनभिन्नकालः प्रशस्तः ॥

अथाकालवृष्ट्यादिविचारः । अथ पौषकृत्यम् । स्मृतिः पौषादिचतुरोमासाज्ञेयावृष्टिरकालजा व्रतयात्राविवाहादिवर्जयेत्सप्तवासरान् एतच्चनिरन्तरदिनत्रयवृष्ट्यां तृतीयेन तु सप्ताहमिति वक्ष्यमाणत्वात् विशेषमाह एकेनैकदिनन्त्याज्यंद्वीतीयेनदिनत्रयम् तृतीयेनतुसप्ताहन्त्यजेदाकालवर्षणे एकेनैकदिनस्पृशावृष्ट्याद्वितीयेनदिनद्वयस्पृशाएवमग्रेऽपि एकदिनमिति तदग्रिमदिनमित्यर्थः एवं दिनत्रयमित्यत्रापि वृष्टिदिनानन्तरदिनत्रयमित्यर्थः एवमग्रेऽपि वृष्टिदिनत्यागो दण्डापूपन्यायात् तथा च वृष्ट्याधिकरणदिनं तदुत्तरमेकत्रिसप्तदिनानि च त्याज्यानि एवं निरन्तरदिनचतुष्टयादिवृष्ट्यावृष्ट्याधिकरणदिनचतुष्टयादिकं तदनन्तरं सप्तदिनानि च त्याज्यानि तत्रापि तृतीयेन तु सप्ताहमेतद्विषयत्वात् अधिकं तु प्रविष्टन्नतु तद्धानिरिति न्यायेन दिनचतुष्टयादिवृष्टौ अवश्यं दिनत्रयवृष्टिसत्वात् अत्रद्वैतपरिशिष्टे एकेनैकदिनस्पृशावृष्ट्या एकं दिनं तदग्रिमं च दिनंत्याज्यम् द्वितीयेनाव्यवहितदिनद्वयस्पृशा वृष्ट्या तदुत्तरं त्र्यहः । वृष्ट्याधिकरणदिनस्याशुद्धत्वन्तु नाशुद्धिं निर्दिशेत्तावदितियावत्तावत्पदसमभिव्याहारात् वृष्टिदिनमादाय एकद्वित्रिगणने तृतीयार्थकरणत्वानुपपत्तिः द्वितीयेन दिनत्रयमित्यत्रदिनैकमित्येव ब्रूयादिति केशव-

मिश्राः । नडीजङ्घस्तु पौषादिचतुरोमासानित्यत्र मासपदं पक्षपरमाह तथाहि मासान्मार्गप्रभृतिमुनयोऽयासवाल्मीकि-गर्गाश्चैत्रंयावद्वर्षणविधौनेतिकालंवदन्ति नाडीजङ्घःसुरगुरुमु-निःप्राहवृष्टेरकालंमासावेतावशुभफलदौपौषमाघौनशेषौ इति पठित्वापौषादिचतुरोमासानित्यत्रपक्षावैमासाइति वदंति । अ-कालवृष्ट्यापि यदि नरपशुचरणचिन्हं भुवि सम्पद्यते तदैवा-शुद्धिर्नान्यथा तथाहि वृत्तेप्यकालवर्षेनाशुद्धिर्निर्दिशेत्तावत् यावन्नभवतिज्ञानेनरपशुचरणाङ्कितावसुधा इति अत्र नरपशु वानर इति मेधातिथिः ॥

अथ ग्रहणादावशुद्धिमाह । एकरात्रंपरित्याज्यकुर्य्यात्पा-णिग्रहंग्रहे प्रयाणेसप्तरात्राणित्रिरात्रंव्रतबन्धनेपाणिग्रहीवि-वाहः ग्रहे ग्रहणे व्रतबन्धने उपनयने एतच्चप्रौढकन्याप्रौढ-माणवकविवाहोपनयनविषयमतोनवक्ष्यमाणवचनाद्विरोधः दि ग्दाहेदिनमेकंचग्रहेसप्तदिनानिच भूकम्पेचसमुत्पन्नेत्रिरात्रंप-रिवर्ज्जयेत्दृश्यतेसिंहिकासूनुरुदितोगगनेयदि यात्रादौमङ्गलेका र्य्येसप्तरात्रंविवर्जयेत् अरिष्टेत्रिविधोत्पातेसिंहिकासूनुदर्शनेस-प्तरात्रंनकुर्वीतयज्ञोद्वाहादिमङ्गलम् दर्शनाद्दर्शनाद्राहोः केतोः सप्तदिनन्त्यजेत् यावत्केतूदयस्तावदशुद्धःसमयोभवेत् धूम-केतौसमुत्पन्नेग्रहणेसूर्य्यचन्द्रयोः ग्रहाणांसङ्गमेचैवनकुर्य्या-न्मंगलक्रियाम् यदाम्बुवृष्टिःकुलिशंपतत्यधोधराप्रकम्पोऽसुर-केतुदर्शनम् तदाविवाहव्रतबन्धनेषुविवर्ज्जयेत्सप्तदिनानिशा-स्त्रतः अम्बुवृष्टिःदिनत्रयमकालवृष्टिः ग्रहैरविन्द्वोरवनीप्रकम्पे-केतूदयोल्कापतनादिदोषेव्रतेदशाहानिवदन्तितज्ज्ञास्त्रयोदशा-

हानिवदन्तिकेचित् अत्रादिपदेनकरकावज्रपातादेरुपग्रहः इति द्वैतनिर्णयप्रदोपे गोकुलनाथोपाध्यायाः ग्रहणभूकम्पोल्कापात करकापातादिसमाहारे त्रयोदशाहमशुद्धिम् किञ्चिन्न्यूनतत्स· माहरेदशाहम् ग्रहणाद्यैकैकोपग्रहेत्र्यहमिति द्वैतनिर्णयः एत त्समुदायार्थपर्य्यालोचनया अयमर्थः पर्य्यवसितः ग्रहणेऽत्यन्त प्रौढकन्याविवाहेतद्दिनमात्रमशुद्धम् प्रौढमाणवकोपनयनेग्रह णदिवमारभ्यदिनत्रय प्रौढभिन्नकन्याविवाहेतादृशमाणवकोप नयनादिमङ्गलकर्मसु ग्रहणानन्तरसप्तदिनमशुद्धम् दिग्दाहे च मंगलकर्म्ममात्रे एकदिनमशुद्धम् भूकम्पेदिनत्रयम् तद्दिनमार- भ्यग्रहणभूकम्पोल्कापातवज्रकरकापातादिसमुदाये एकस्मि- न्दिनेजाते उपनयने त्रयोदशदिनमशुद्धम् किञ्चिन्न्यूनतत्समुदा येजाते दशाहाशुद्धम् अन्यत्सुगमं। भूमिदारणेवज्रमात्रपाते वा मङ्गलकर्ममात्रे तद्दिनानन्तरन्दिनमेकमशुद्धमिति द्वैतपरि- शिष्टाद्यनुसारीयः पन्थाः। व्रतान्हिपूर्वसन्ध्यायांवारिदोयदि- गर्जतितद्दिनंस्यादनध्यायंव्रतंतन्नकारयेत्। व्रतमुपनयनम् पू- र्वसन्ध्याप्रातःसन्ध्या अत्रप्रमाणं विष्णुपुराणम् ततोऽखिलज- गत्पद्मवोधायाच्युतभानुना देवकीपूर्वसन्ध्यायामाविर्भूतंमहा- त्मना इति प्रभातसन्ध्यासमयेगर्जितेतदाह्यनध्याय इतिरत्न- सारशतकं च तथा च उपनयनदिनेप्रातःसन्ध्यागर्जेतद्दिनमु- पनयनेऽशुद्धमित्यर्थः पर्य्यवसितः पक्षधरमिश्रीयमानवोधसार- संग्रहेप्येवमेव तथाहिव्रतान्हिपूर्वसन्ध्यायामित्यादिवाक्यस्यउ- क्तत्वात्। महाभारते अमार्कपातश्रवणैर्युक्ताचेत्पौषमाघयोः अर्द्धोदयस्सविज्ञेयः कोटिसूर्य्यग्रहैस्सम अमा अमावास्या॥

अथ अर्द्धोदयः । पौषमाघयोरित्यनेनान्वयः अर्कों रविवारः पातो व्यतीपातयोगः । श्रवणार्कव्यतीपातैरमावास्यापौषमाघयोः अर्द्धोदयस्सविज्ञेयःकिञ्चिन्न्यूनेमहोदयः। योगोयं दिवैव शस्तः तथाहि तिथितत्त्वचिन्तामणिधृतवचनम् दिवैवयोगश्शस्तोयं नतुरात्रौकदाचनेति फलमाह अर्द्धोदयेतुसंप्राप्ते सर्वङ्गङ्गासमञ्जलम् शुद्धात्मानोद्विजास्सर्वेभवेयुर्ब्रह्मसन्निभाःयत्किञ्चिद्दीयतेदानन्तद्दानंमेरुसन्निभम् । अत्रसङ्कल्पः ओमद्य पौषेमासिकृष्णेपक्षेअमावस्यायांतिथावमुकगोत्रस्यामुकशर्म्मणो ममसूर्यग्रहकालीनगङ्गास्नानजन्यफलकोटिगुणप्राप्तिकामोर्द्धोदयेगङ्गायांस्नानमहङ्करिष्ये । एवं माघेपि तत्र पौषस्थाने माघेमासीत्येवविशेषः । एतन्मासे महिषीप्रसवे दोषशान्तिर्भाद्रे ऽभिहिता ॥

अथ वैशाखादौकौशिकोस्नानेप्रमाणमभिहितंप्राक् पौषोपूर्णिमायांतत्स्नानेप्रमाणाभावेपिशिष्टाचारात्स्नानंकर्तव्यम् तत्र सङ्कल्पमाह सङ्कल्पावली ओमद्येत्यादिपृथिव्यधिकरणसकलतीर्थस्नानजन्यफलप्राप्तिकामः कौशिक्यांस्नानमहङ्करिष्ये ओङ्गाधिराजसुतेदेविविश्वामित्रमुनेस्स्वसाऋचीकभार्येसत्यार्येपापंमेहरकौशिकि इति पठित्वा स्नायात् ॥

अथ माघकृत्यम् । तत्रप्रातःस्नानकालमाह । तिथितत्त्वचिन्तामणौ स्मृतिः उत्तमन्तुसनक्षत्रंलुप्ततारन्तुमध्यमम् सवितर्युदितेभूपततोहीनंप्रकीर्तितम् । अरुणोदयवेलास्नानफलमाह । योमाघमास्युषसिसूर्यकराभितामे स्नानंसमाचरतिचारुनदीप्रवाहे उद्धृत्यसप्तपुरुषान्पितृमातृवंश्यान् स्वर्गंप्रयात्यम-

रदेहधरोनरोसौ। अत्रमासः सौरः तेन मकरसंक्रमदिनमारभ्य प्रातःस्नान नियमः जलमात्रेतु पद्मपुराणे स्वर्ग लोकेत्विरस्वासोयेषां मनसिवर्तते यत्रकुत्रजलेतैस्तुस्नातव्यंमृगभास्करे मृगभास्करे मकरस्थे रवौ। स्नानमन्त्रस्तु मकरस्थेरवौमाघेगोविन्दाच्युतमाधव स्नानेनानेनमेंदेवयथोक्तफलदोभव इतिनरसिंहपुराणे। शीतकालेमहावन्हिंप्रज्वालयतियोनरः सर्वसत्वहितार्थायशीतोपशमनायवै॥

अथ माघकृष्णचतुर्थीगणेशचतुर्थी। अस्यां गणेशोत्पत्तिमाह शिवधर्मे सर्वदेवमयःसाक्षात्सर्वमङ्गलकारकः माघकृष्णचतुर्थ्यान्तुप्रादुर्भूतोगणाधिपः। इयं चतुर्थी तृतीयायुता ग्राह्या गणेशगौरीबहुलाव्यतिरिक्ताप्रकीर्तिता चतुर्थीपञ्चमीविद्धेत्यादिवचनात् गणेशचतुर्थ्यांव्यतिरिक्तचतुर्थ्या एव पञ्चमीयोगप्राशस्त्याभिधानात् मातृविद्धागणेश्वर इतिवचनात् चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते इति वृहस्पतेश्च। एतच्चोभयदिने मध्याह्नव्याप्तौ उत्तरदिने एव मध्यान्हव्यापिनीत्वेतस्यात्परतश्चाप्यपरेहनीति वृहस्पतेः। माघेमासिगणेशदेवताचतुर्थीति निबन्धमात्रेपि प्रसिद्धेति ठक्कुराः॥ अमावास्यायां अर्द्धोदयः सपौषकृत्ये द्रष्टव्यः॥

अथ माघशुक्लपञ्चमी श्रीपञ्चमी सा च पूर्वयुतेति माधवाचार्यः दिवोदासोपि माघशुक्लापञ्चमीपूर्वविद्धाप्रशस्यते इति मैथिलगौडसम्मतमेतत् हेमाद्रिमते परेतिदाक्षिणात्याः॥

अथ माघशुक्लसप्तमी अरुणोदयव्यापिनी ग्राह्या तथा च विष्णुः सूर्यग्रहणतुल्याहिशुक्लमाघस्यसप्तमी अरुणोदयवेला-

यांतस्यांस्नानम्महाफलं । अरुणोदयवेलायांशुक्लामघास्यसप्तमी प्रयागेयदिलभ्येतकोटिसूर्य्यग्रहैःसमा इतिक्कचित्पाठः । तत्र सप्तार्कपत्राणि सप्तबदरीपत्राणि शिरसि निधाय वक्ष्यमाण-मन्त्रेण स्नायात् । यद्यज्जन्मकृतंपापम्मयासप्तसुजन्मसु तन्मे-रोगञ्चशोकंचमाकरीहन्तुसप्तमीति मन्त्रः रोकं च शोकं चेति तिथितत्वे पाठः रोकं छिद्रमितिव्याख्यानञ्च ओंएतज्जन्म-कृतंपापंयच्चजन्मान्तरार्जितं मनोवाक्कायजंयच्चज्ञाताज्ञातञ्चय-त्पुनः इतिसप्तविधम्पापंस्नानान्मेसप्तसप्तिके सर्वंव्याधिसमा-युक्तंहरमाकरिसप्तमी इति मन्त्रं पठेत् । उभयदिने अरुणोयद-काले सप्तमीलाभे पूर्वदिने एव स्नानं अधिककालव्यापित्वात्॥

अरुणोदयकालमाह। चतस्रोघटिकाप्रातररुणोदय उच्यतेइति॥

अथ माघशुक्लाष्टमी भीष्माख्या तस्यां भीष्मतर्पणान्याह पाद्मे माघेसासिसिताष्टम्यांसलिलैर्भीष्मतर्पणं श्राद्धंचयेनराः कुर्य्युस्तेस्युःसन्ततिभागिनः । भारते शुक्लाष्टम्यन्तुमाघस्यदद्या द्भीष्माययोजलं सम्बत्सरकृतं पापन्तत्क्षणादेवनश्यति । एत-त्तर्पणे सर्ववर्णानामधिकारः । इयानेवविशेषः ब्राह्मणः पितृ-तर्प्पणानन्तरम् क्षत्रियादयस्तुप्रथममेव भीष्मतर्पणं कुर्युरि-तिसमाचारः । तर्पणमन्त्रो यथावैयाघ्रपद्यगोत्रायसांकृतिप्रव-रायच अपुत्रायददाम्येतत्सलिलम्भीष्मवर्मणे इतिसतिलाञ्ज-लिन्दत्वा पठेत् ओंभीष्मशान्तनमोवीरः सत्यवादीजितेन्द्रि-यः आभिरद्भिरवाप्नोतुपुत्रपौत्रोचितिक्रियामिति ।

अथ माघीपूर्णीमापरयुताग्राह्या यथोक्तं ब्रह्मवैवर्तेभूतवि-द्धेनकर्तव्येदर्शंपूर्णेकदाचनेति ॥

अथ फाल्गुनकृत्यम् । स्मृतिः फाल्गुनस्यचमासस्यकृष्णाष्टम्यांमहीसुता यातादासरथेःपत्नीतस्मिन्नहनिजानकी । उपोषितोरघुपति स्समुद्रस्यतटेतदा रामपत्नीचसम्पूज्यासीताजनकनन्दिनीति ॥

अथ फाल्गुनकृष्णचतुर्द्दश्यांशिवरात्रिव्रतम् तच्चप्रदोषनिशीथोभयव्यापिन्यां चतुर्दश्यां तथाहि त्रयोदशीयदादेविदिनभुक्तिप्रमाणतः जागरेशिवरात्रिःस्यान्निशिपूर्णाचतुर्दशीति । दिनभुक्तिरस्तमनकालः । निशीथमाह महानिशीद्वे घटिकेरात्रेर्मध्यमयामयोरिति तथा च द्वितीयप्रहरशेषदण्डः तृतीयप्रहररात्रिप्रथमदण्ड इति दण्डद्वयनिशीथ इति भावः । यदि पूर्वदिने निशीथव्यापिनी परदिने प्रदोषव्यापिनी तदा पूर्वदिने व्रतं निशीथव्यापिनी ग्राह्या शिवरात्रिचतुर्दशीति वचनात् प्रदोषमाह ठक्कुराः प्रदोषोघटिकाचतुष्टयम् इति एतत्पारणन्तु चतुर्दश्यन्ते तथाहि कृष्णाष्टमीस्कन्दषष्ठीशिवरात्रिचतुर्दशी एताः पूर्वयुताकार्यास्तिथ्यन्तेपारणम्भवेत् इति । पारणकाले चतुर्दश्यन्तासंभवे चतुर्दश्यामपिपारणमाह पाद्मे उपोषणञ्चतुर्दश्यांचतुर्द्दश्यांचपारणं कृतैःसुकृतलक्ष्यैस्तुलभ्यन्तेवानवानरैः॥

अथ शिवरात्रिव्रतारम्भप्रकारः । फाल्गुनकृष्णचतुर्दश्यां प्रातःस्नानादिराचान्तः उत्तराभिमुखो वारिपूर्णताम्रपात्रमादाय भगवन्सूर्यभगवत्योदेवता इत्यादिचतुर्दशवर्षं यावत् प्रति फाल्गुनकृष्णचतुर्दश्यां शिवरात्रिव्रतमहङ्करिष्यामि इति निवेद्य कुशादिकमादायामुकगोत्रस्यामुकशर्मणो ममान्तकालीनशिवानुचरत्वशिवलोकसहितत्वदेवसाहित्यसुरालयभ्रमणभू-

पालत्वसार्वंदिकशिवभक्तिरूपबुद्धिविवेकाऽपहृताजत्वलक्ष्मी-गोधनप्राप्तिकामो ऽद्यादिचतुर्दशवर्षंयावत् प्रतिफाल्गुनकृ-ष्णचतुर्दश्यांशिवरात्रिव्रतमहङ्करिष्ये इति सङ्कल्प्यव्रतारम्भः । चतुर्दशवर्षपर्यन्तं व्रतं समाप्य उद्यापनं गोदानं कुर्यात् । उ-द्यापनाशक्तौ तथा शक्ति ब्राह्मणान् भोजयेत् ॥

अथ नक्तव्रतन्तु दिनोपवासपूर्वकरात्रिभोजनरूपं । तत्र-दिवरात्र्युभयव्यापिन्यां चतुर्दश्यां उभयव्याप्त्यसम्भवेप्रदो-षव्यापिन्यां तथाहि स्कान्दे दिवारात्रिव्रतंयच्चएकएवतिथौ-स्मृतं तस्यामुभयव्यापिन्यांकुर्यादेवव्रतंव्रती । व्यासःप्र-दोषव्यापिनीग्राह्यासदानक्तव्रतेतिथिः यदि चोभयदिने प्र-दोषव्यापिनी चतुर्दशी तदा परदिने यदिस्यादुभयोरन्ह्योः प्रदोषव्यापिनीतिथिः । तत्रोत्तरत्रनक्तंस्यादुभयत्रैवसायत इतियाज्ञवल्क्यवचनात् । उभयत्र दिवसे रात्रौ च प्रदो-षोत्र त्रिमुहूर्तम् त्रिमुहूर्तंप्रदोषःस्याद्भानावस्तङ्गतेसति इति व्यासोक्तेरिति ठक्कुराः प्रदोषोस्तमयादूर्ध्वंघटिकाद्वयमिष्यते इत्युक्त्वा अत्रघटिकादण्डद्वयरूपेति गौडाः ॥

अथ नक्तव्रतारम्भप्रकारमाह । व्रतपद्धतौ ओमद्यभगवन्सू-र्यभगवत्योदेवताअद्यादिवर्षंयावत्प्रतिकृष्ण चतुर्दशीषुनक्तेतर-भोजननिवृत्तव्रतमहङ्करिष्ये । फाल्गुनकृष्णचतुर्दश्यामेतद्व्र-तारम्भः एवं द्वित्रिवर्षादिव्याप्यकरणे सङ्कल्प ऊहेनकर-णीयः । सन्ध्यामतीत्यभोजनमाह ॥

अथ मार्कण्डेयः । चत्वारियानिकर्माणिसन्ध्यायांपरिव-र्जयेत् आहारंमैथुनंनिद्रांस्वाध्यायश्चचतुर्थकमिति अत्र सन्ध्या-

प्राक्प्रातरेवहितिष्ठेदासूर्यदर्शनादिति किंश्चिदालक्ष्यतारकाका-लात् सूर्यदर्शनावधिः सन्ध्याकाल इति अस्तमयादूद्र्ध्वं संध्या सा च नक्षत्रदर्शना वधेः पूर्वं इति सन्ध्यायाश्चात्यल्पत्वात् घटिकात्रयात्मकः सन्ध्याकालस्त डित्गर्जितादिनिमित्तयो-र्विधिप्रतिषेधयोः स एव गृह्यते इति सन्ध्याद्वयप्रमाणमुक्त-वन्तस्तिथिचन्द्रिकायां पक्षधरमिश्राः ॥

अथ अशक्त्यादिना स्वयं व्रताद्यकरणे प्रतिनिधिद्वारापि कारितव्यमाह पराशरः उपवासंव्रतंहोमन्तीर्थयात्राजपादिकं विप्रैःसम्पादितंयस्य सम्पन्नं तस्य तत्फलं । स्कन्दपुराणे असामर्थ्येशरीरस्यव्रतेचसमुपस्थिते कारयेद्धर्मपत्नीवापुत्रम्वावि-नयान्वितम् भ्रातरंभगनींशिष्यंब्राह्मणंदक्षिणादिभिः कात्या-यनः । पितृमातृपतिभ्रातृगुर्वर्थेचविशेषतः उपवासंप्रकुर्वाणः पुण्यंशतगुणंलभेत् । भार्याभर्तुर्व्रतङ्कुर्याद्भार्य्यायाश्चपति-स्तथा असामर्थ्येतयोरेवंव्रतभङ्गोनजायते । राज्ञश्चक्षत्रियस्या-र्थेएकादश्यामुपोषितः पुरोधाःक्षत्रिणासार्द्धंफलमाप्नोतिनि-श्चितं उपवासफलंताभ्यांसममेवमवाप्यते ॥

अथ स्त्रीणां तु स्वाम्याज्ञाम्विना व्रतादि न कार्य्यं तथाहि नारीयात्वननुज्ञातापित्राभर्त्रासुतेनवा निःफलन्तुभवेतस्याःय-त्करोति व्रतादिकं । सङ्कल्पितव्रतमशौचेपिकर्तव्यम् तथाच-विष्णुः नव्रतिनांव्रतेइति व्रतिनामारब्धव्रतानां नव्रते इत्यशौ-चंइत्यशौचप्रतिरोधक इतिशेषः । विष्णुः व्रतयज्ञविवाहेषुश्रा-द्धेहोमार्च्चनेजपे आरब्धेसूतकन्नस्यादनारब्धेतुसूतकम् । अना-रम्भ उक्तो हारीतेन आरम्भोवरणं यज्ञेसंकल्पव्रतजापयोः

नान्दीश्राद्धंविवाहादौश्राद्धेपाकपरिक्रिया इति श्राद्धे दर्शश्राद्धविषयमितिस्मार्ताः । सङ्कल्पमाह पराशरः मनसासङ्कल्पयतिवाचाअभिलपतिकर्मणाचोपपादयतीति भविष्ये सङ्कल्पेनविनाराजन्यत्किञ्चित्कुरुते नरः फलंचाल्पाल्पकन्तस्यधर्मस्यार्द्धक्षयोभवेत् इति भविष्ये शुक्तिशङ्खाश्महस्तैश्चकांस्यरूप्यादिभिस्तथा सङ्कल्पेनचकर्तव्योमृन्मयेनकदाचन गृहीत्वोदुम्बरंपात्रंवारिपूर्णमुदङ्मुखः दर्भत्रयंसाग्रमूलफलंपुष्पतिलान्वितमिति ॥

अथ व्रते प्रारम्भे स्त्रिया रजोयोगे अन्यद्वारा पूजां कारयेत् तथा मात्स्ये यदात्वशुद्धा तदान्येनकारयेत् ॥

अथ गोविन्दद्वादशीयोगमाह । फाल्गुनस्यासितेपक्षेकुम्भस्थेदिवसाधिपे जीवेधनुषिसंस्थेचशोभनेरविवासरे पुष्यर्क्षेणचसंयुक्तागोविन्दद्वादशीमता । दिवसाधिपे सूर्ये जीवे बृहस्पतौ पुष्यर्क्षे पुष्यनक्षत्रं । अस्यां कर्तव्यमाह गोविन्दद्वादशीप्राप्यगच्छेच्छ्रीपुरुषोत्तमं विष्णुलोकमवाप्नोतिमोक्षङ्गङ्गाम्बुमज्जनात् पुरुषोत्तमं जगन्नाथक्षेत्रं । पूर्ववचनस्थफलमुच्चार्य सङ्कल्प्यपठेत् महापातकसञ्ज्ञानियानिपापानिसन्तिमे गोविन्दद्वादशींप्राप्यतानिमेहरजान्हवीति पठित्वा गङ्गायां स्नायात् ॥

अथ होलिका । सा च सायान्हव्यापिन्यां चतुर्दशीविद्धायां पूर्णिमायां भद्राशून्यायां होलिकादाहः तथाहि सायान्हेहोलिकांकुर्य्यात् पूर्वान्हेक्रीडनङ्गवामिति श्रावणीदोर्गनवमीदूर्वाचैवहुताशनीपूर्वविद्धैवकर्तव्यापरविद्धानकुत्रचित् भद्रायांदीपिताहोलीराष्ट्रभङ्गङ्करोतिवै इति भद्रायांद्दिनकर्तव्येश्राव-

णीफाल्गुनीतथेति यदि च पूर्वदिने सायान्हे भद्राशून्या सा न लभ्यते तदा परदिने तथाहि ब्रह्मवैवर्ते होलिकापौर्णमासीतु- सायान्हव्यापिनीमता भूतविद्धेनकर्तव्येदर्शेपूर्णेकदाचनेति । यत्तुप्रतिपद्यग्निकरणं द्वितीयायांगवार्चनम् क्षत्रच्छेदङ्करिष्येते- र्वित्तनाशंकुलक्षयं इत्यादिवचनं उत्तरदिने होलिकानिषेधकं तच्चपूर्वदिने सायान्हे भद्राशून्यपूर्णिमालाभे वेदितव्यम् । अत्रतिथितत्वचिन्तामणौ दिनद्वयेप्रदोषव्याप्तौपरैवेति । यदि पूर्वदिने चतुर्दशी प्रदोषव्यापिनी परदिने पूर्णिमा सायान्हात् प्रागेव समाप्यते तदा पूर्वदिने संपूर्णरात्रौ भद्रासत्वात्तन्नि- षेधात्परेहनि प्रतिपदैव कुर्यादिति ठकुराः ॥

अथ होलिकादाहेवायुफलमाह । पूर्ववायौहोलिकायांप्र- जाभूपालयोःसुखं पलायनंचदुर्भिक्षंदक्षिणेजायते ध्रुवं पश्चिमे- तृणसम्पत्तिरुत्तरेधान्यसम्भवः यदीशानेप्यनावृष्टिरूर्द्ध्वंराजा- समाश्रयेत् इतिद्वादशमासकृत्यम् ॥

अथ ग्रहणविचारः । तच्च यज्जन्मराश्यादौ ग्रहणं तस्य ग्रहणदर्शने दोषमाह धीधर्म्मणेधनमदव्ययशर्मकर्मजन्मोपगं- रविशशिग्रहणंनराणां पुत्रायुरर्थपरिनाशकमीक्षितंस्याद्रोगम्व- पुःक्षयमनःक्लममातनोति तथा च पञ्चनवमाष्टमसप्तमद्वादश- चतुर्दशजन्मराशौ वा ग्रहणे तद्ग्रहणदर्शने रोगादिकं भव- तीत्यतो नावलोकनीयमिति भावः ॥

अथ ग्रहणे श्राद्धमावश्यकं तथाहि सर्वस्वेनापि कर्तव्यं- श्राद्धंवैराहुदर्शने अकुर्वाणास्तुतच्छ्राद्धंपङ्के गौरिवसीदति इति शातातपः ॥

अथ यावत्पर्य्यन्तं दर्शनयोग्य उपरागस्तावानेव पुण्य-कालः तथाहि जाबालिः चन्द्रसूर्योपरागेतुयावद्दर्शनगोचरः उपरक्तदर्शनानन्तरं यावद्दर्शनयोग्ये उपरागस्तावानेवपुण्यका-लोनसंक्रान्तिवदधिकोपि द्वैतपरिशिष्टे अत्र शातातपवचने रा-हुदर्शनेचेति देवलवचने च दर्शनगोचर इति दर्शनपदाभ्यां-चाक्षुषज्ञानविषयस्यैव निमित्तता चाक्षुषज्ञान एव दर्शनप-दस्यशक्तत्वात् तच्च ज्ञानंस्नानादिकर्तु रेव लाघवात् एवं च स्पृष्टेपि ग्रासे अपश्यतो नाधिकारः नचैवंमज्जनकाल एव पुण्यकालो न स्यादिति वाच्यम् गोचरपदस्य तद्योग्यतालक्ष-कत्वात् सा च योग्यतादर्शनबोधकमानाभावरूपा सा च मेघ-गुल्मादिव्यवहितेप्यसति मेवाद्यपगमे तद्दर्शनस्यापि सम्भवात् अन्यदृष्टे ग्रासेऽन्यस्यस्नानाधिकार इति केचित् तन्न लाघवेन सामानाधिकरण्यस्यैव योग्यत्वात् राहुदर्शनसंक्रान्तीत्यादि अन्यस्यात्य शक्तत्वाच्च इति केशवमिश्राः ॥

अथात्र श्राद्धे फलमाह । स्नानन्दानन्तपःश्राद्धमनन्तंरा-हुदर्शने राहुदर्शनदत्तंहिश्राद्धमाचन्द्रतारकं गुणवत्सर्वकामीयं-पितॄणामुपतिष्टते । मनुः रात्रौश्राद्धं नकुर्वीतराक्षसीकीर्तिता-हिसा सन्ध्ययारुभयोश्चैवसूर्येचैवाचिरोदिते एतट्टीकायां अचि रोदित इत्यत्र कालापेक्षायां त्रिमुहूर्तः प्रातःकालो ग्राह्यः । विष्णु पुराणे यथोक्तं रेखाप्रभृत्यथादित्येत्रिमुहूर्तंगतेरवौ प्रा-तस्तत्रस्मृतः कालोभागःसोन्तस्तुपञ्चम इतिकुलूकभट्टः ॥

अथ राहुदर्शने तु रात्रावपि श्राद्धं कर्तव्यमेव तथाह विष्णुः सन्ध्यारात्र्योर्नकर्तव्यंश्राद्धं खलविचक्षणैः तयोरपिच-

कर्तव्यंयदिस्याद्राहुदर्शनम् । देवलः राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु स्नानदानादीत्यादि पदं तर्पणाद्युपलक्षकम् संवत्सरप्रदोपधृतस्मृतिः । सूतकेमृतकेचैवनदोषोराहुदर्शने स्नानमात्रंतुकर्तव्यंदानंश्राद्धविवर्जितमिति तथाचाशौचिना गृहणेस्नानमात्रं कर्तव्यम् न तु दानादिकमिति भावः ॥

अथ नाद्यात्सूर्यग्रहात्पूर्वमह्निसायंशशिग्रहात् ग्रहकालेच नाश्नीयात्स्नात्वाश्नीयाच्चमुक्तयोः मुक्तयोरिति चन्द्रसूर्ययोरिति शेषः अत्रार्द्धरात्रानन्तरग्रहणे दिनभोजनेनदोषः किन्तुश्राद्धादि करणेभोजनजन्यमशौचं भवत्येवेति व्रतपद्धतिः । तथा च श्राद्ध करणेच्छावतातादृशचन्द्रग्रासे दिनेपि भोजनन्न कर्तव्यमिति तात्पर्य्यं मुक्तेशशिनिभुञ्जीत इति वचनात् ग्रहणमुक्त्यनन्तरं भोक्तव्यं तत्रापियद्युपाधिवशान्मुक्तिर्न दृश्यते तदा मुक्तिकालमनुमीय भोक्तव्यं तथाहि मेघभालादिदोषेणमुक्तिर्यत्रन दृश्यते आकलय्यतुतत्कालम्भुंजीताथाविशङ्कतः । स्मृतिः सूर्यवारेरविग्रासश्चन्द्रवारेशशिग्रहः चूडामणिरितिख्यातस्तत्रानन्तफलंस्मृतं इन्दोर्लक्षगुणंप्रोक्तंरवेर्दशगुणंस्मृतङ्गङ्गातीरे तुसम्प्राप्तेइन्दोः कोटिरवेर्दश ॥

अथ ग्रहणादौफलमाह । व्यवहाररत्नावली कृत्तिकाभरणीपुष्य पूर्वभाद्रस्तथामघा विशाखाफाल्गुनीपूर्वाआग्नेयम्मण्डलम्विदुः अस्मिन्नक्षत्रयोगेयदिचलतिमहीचन्द्रसूर्यग्रहोवा- निर्वातोल्काशनीनांकथमपिपतनेदर्शनेचापिकेतोर्दह्यन्तेकाननानिप्रबलतरमहीतोव्रतेजाःपतङ्गारोगैः पित्तज्वराद्यैर्निखिलतनुगतैःपीड्यतेजीवलोकः स्वातीहस्ताश्विनोचित्रा मृगशीर्ष-

म्पुनर्वसूउत्तराफाल्गुनीचैववायव्यंमण्डलम्विदुः । प्राकाराट्टाल चैत्याःपृथुगृहतरवोगोपुराभूधराश्च आमूलंशीर्यमाणाःपवनयव वशाद्यान्तिभूभागमाशु नारीगोगर्भपातास्तदनुचनियतंमन्दशस्याधिरित्री दुर्भिक्षञ्चातिकष्टंभवतिचमहतोव्याधिपीडानराणां। चैत्योग्रामोपलक्षकवृक्षः पृथुस्थूलः गोपुरन्तर्वहिर्द्वारोतिकोषः यवो वेगः । ज्येष्ठानुराधारोहिण्यःश्रवणाभिजितन्तथा उत्तराचधनिष्ठाचमाहेन्द्रम्मण्डलविन्दुः । लोकेनित्यप्रमोदोविनययुतमनावष्टरोगावकाशो दानेभोगेनुरक्तःसकलगुणयुतःसर्वदुःखैर्विमुक्तःकीर्तिंनिस्तीर्यरम्यांत्रिभुवनफलकेवर्द्धयन्धर्मवृद्धिं कोषैः पूर्णोनरेन्द्रो घनइवरूचिरम्वर्द्धतेश्रीसमेतः शतभिषाचोत्तराभाद्रःपूर्वाषाढश्चरेवती आर्द्रामूलन्तथाश्लेषावारुणम्मंडलम्विदुः । गर्जन्तेवारिवाहाजलभुवनमिताक्षोरगर्भाश्चगावः सस्यैः पूर्णाधरित्रीज्वरभयरहिताजन्तवः सर्वदैव ॥

अथ मलमासः । सचशुक्लप्रतिपदादिः तथाहि इन्द्राग्नीयत्रहूयेतेमासादिःसप्रकीर्तितः अग्नीषोमौस्मृतौमध्येसमान्तौपितृसोमकौ अस्यार्थः इन्द्राग्नियागः शुक्लप्रतिपदादिसमासादिः अग्नीषोमयोर्यागेपूर्णिमायाममावस्यायां समासान्त इति । ज्योतिषेगतेब्दद्वितयेसार्द्धेपञ्चपक्षेदिनत्रये दिवसस्याष्टमेभागेपतत्येकोधिमासकः तथा च द्वात्रिंशन्मासमष्टादशदिनं चातीत्य मलमासो भवतीति पर्यवसितम् । चैत्रादयःसप्तसदाधिमासा इतिवचनात् चैत्रादिसप्तमासेष्वेवमलमास इतिकेचित् इदमुपलक्षणंकार्तिकादिमासस्यापि मलमासत्वस्योक्तत्वात्तथाहि ज्योतिषे दशानांफाल्गुनादीनांप्रायोमाघस्यचक्कचित् नपुंसकत्वं भवतिनतुपौषस्यतुक्कचित् । नपुंसकत्वं मलमासत्वं ॥

कदाचित् कार्त्तिकादिमासत्रये संक्रान्तिद्वययुक्तः शुक्लादिचान्द्रः क्षयाख्योभवति तत् क्षयाख्यपूर्वंपरतसचमल मासप्रसक्तिर्भवति तथाहि ज्योतिषे असंक्रांतिमासोऽधिमासः स्फुटः स्यात् द्विसंक्रांति मासः क्षया ख्यः कदा चित् क्षयःकार्तिकादित्रयेनान्यतः स्यात्तदावर्षमध्येऽधि मासद्वयंस्यादिति। क्षयाख्यः क्षयनामाक्षयः क्षयनामकः न तु वस्तुगत्या लुप्तमासः अत एव मासयोः सङ्कर एव क्षयो न कस्यापिलोप इतिमासमीमांसायां गोकुलनाथोपाध्यायाः। तथा च यत्रकाकार्तिके क्षयाख्यः तत्र कार्तिककृष्णमार्गशुक्लपक्षयो रविकृतत्वमेव कार्तिकशुक्लमार्गकृष्णपक्षयोःक्षयकार्तिकशुक्लक्षयमार्गकृष्णत्वेनाभिधानमात्रं न तु शुक्लादिकार्तिकलोपः। एवं मार्गा दावपिज्ञेयमिति भावः। न च मासालोपेमलमासद्वयप्रशक्तौ च सत्यां सम्वत्सरस्य चतुर्दशमासात्मकत्वापत्तिरिष्टापतौ द्वादशमासाः सम्वत्सरस्त्रयोदशमासाः सम्वत्सर इति श्रुतेः त्रयोदशन्तुश्रुतिराह मासश्चतुर्दशः क्वापिनचास्ति दृष्ट इति भीमपराक्रमधृतस्मृतेश्च विरोधापाद्ये त इति वाच्यम् मलमासद्वयप्रशक्तिसत्वेपि एकस्मिन्नप्यब्दे यत्रैतन्नक्षम् मासयोरुभयोः तत्रोत्तरोधि मासः स्फुटगत्याभवति चार्केन्द्वोः। एकलमासंद्वितयंयदिस्याद्वर्षेधिकन्तत्रपरोधिमासः मासद्वयस्यमध्येतुसंक्रांतिर्न्नयदाभवेत्। प्रकृतस्तत्रपूर्वःस्यादुत्तरस्तुमलिम्लुचइत्यादि भीमपराक्रमहेमाद्रिकृत्यमहार्णवद्वैतपरिशिष्टदैवज्ञवान्धवादिग्रन्थधृतार्षविशेषवचनेभ्यः क्षयाख्य मासोत्तरयथोक्तलक्षणवतो मासस्यैव मलमासत्वे क्षयाख्यपू-

र्वमासस्य च प्रकृतत्वे सिद्धे क्षयाख्यपूर्वमासस्य मलमासत्वप्रति
षेधात् एतल्लक्ष्म असंक्रान्तस्वरूपमलमासचिन्हं उत्तरः क्षया-
ख्योत्तरः एकत्रेति वर्ष इत्यन्वयिमासद्वितयमिति अधिकमि-
त्यन्वयि तथा च क्षयाख्यपूर्वस्य नमलमासता किन्तुक्षयाख्यो
त्तरमासस्यैवेति भावः मैथिलव्यवहारोप्येवमेवेति । अत्रयदा-
ऽनेका मासानां यथोक्तमलमासलक्षणं तदा पूर्वमासानां मल
मासतातावन्नास्ति किन्तु चरमस्यैव यथोक्तलक्षणवत् इति ।
क्षयमासः कर्मार्ह एव अपवादकाभावात् इति चकृत्यमहा-
र्णवे वाचस्पतिमिश्राः प्राहुरिति न किञ्चिदनुपपन्नं ॥ अथ
मलमासे कर्तव्याऽकर्तव्ये तत्र बृहस्पतिः नित्यनैमित्तिकेकु-
र्यात्प्रयतः सन्मलिम्लुचे तीर्थस्नानंगजच्छायांप्रेतस्नानन्त-
थैवच गर्भेवाद्धुषिकृत्येचमृतानांपिण्डकर्मसु सपिण्डीकरणे-
चैवनाधिमासम्विदुर्बुधाः । नित्यं सन्ध्यावन्दनादि नैमित्तिकं
ग्रहणादिःनिमित्तकस्नानादि तीर्थस्नानं द्वीतीयाद्यावृत्तिप्रथ-
मावृत्तिस्नानकरणस्याग्रेऽनुपदमेव वक्ष्यमाणत्वात् गजच्छा-
येति तन्निमित्तकश्राद्धमित्यर्थः प्रेतस्नानं मरणनिमित्तक-
स्नानं गर्भे गर्भाधाननिमित्तककर्माणि वाद्धुषिकृत्ये ऋ-
णादौ मृतानां पिण्डकर्मसु पूरकादिपिण्डेषु एकादशाहश्रा-
द्धादौ च नाधिमासम्विदुरिति प्रतिरोधकमित्यादितथाचैत-
त्सर्वं मलमासेपि कर्तव्यमिति भावः बृहस्पतिः मलिम्लुचे-
चनावृत्तंतीर्थस्नानमपित्यजेत्अना वृतप्रथमावृत्तिः ज्योतिषे
अग्न्याधेयमप्रतिष्ठाश्चयज्ञदानव्रतानिच देवव्रतवृषोत्सर्गंचूडा-
करणमेखलाः मांगल्यमभिषेकञ्चमलमासेविवर्जयेत् त्यजे-

दानम्महादानंव्रतंदेवविलोकनं वापीकूपतडागादिप्रतिष्ठा यज्ञ-कर्मंच। प्रतिष्ठा उद्यापनं शिवादिप्रतिष्ठा वा मेखला उपनयनं महादानं तुलापुरुषादिदानं स्मृतिः सपिण्डीकरणादूर्द्ध्वंयत्-किञ्चिच्छ्रा द्धिकंभवेत् इष्टंवाप्यथवापूर्तंतन्नकुर्यान्मलिम्लुचे श्राद्धिकं श्राद्धः ॥

इष्टं पूर्तंचाह रत्नाकरे जातू कर्णः अग्निहोत्रंतपस्सत्यं-वेदानांचानुपालनम् आतिथ्यंवैश्वदेवश्चइष्टमित्यभिधीयते। वापीकूपतडा गादिदेवतायतनानिच अन्नप्रदानमारामाःपूर्त-मित्यभिधीयते। मरणदिनमारभ्य एकादशमासिककाला-भ्यन्तरे यदि मलमासस्तदा मासिकमेकंवर्द्धयेत् तथाहि विष्णु सूत्रं सम्वत्सराभ्यन्तरे यद्यधिमासपातो भवति तदा मासि-कार्थंदिनमेकं वर्द्धयेत् इतिसम्वत्सराभ्यन्तरे एकादशमासि-ककालाभ्यन्तरे एकादशमासिककालश्च एकादशमासपूर्ति-दिनाव्यवहितोत्तरक्षयाह तिथिः तथात्र तदभ्यन्तरे मलमा-सपाते सप्तदशश्राद्धसङ्कल्पः त्रयोदशे मासि पूर्णे क्षयाहे वा-र्षिकमितितात्पर्यं अत्रसम्वत्सरशब्दएकादशमासपरः ऋष्य-शृङ्गवचनैकवाक्यताबलादिति द्वैतनिर्णयः मरणदिनमारभ्य द्वादशमासस्य मलमासत्वेनमासिकवृद्धिःतेनमलमासएव क्ष-याहे प्रथमवार्षिकं तथाहि ज्योतिषे जातकर्मणीयच्छाद्धंन-वश्राद्धन्तथैवच प्रतिसम्वत्सरश्राद्धमलमासेपितत्स्मृतमिति नवश्राद्धं चतुर्थपञ्चमनवमैकादशश्राद्धं प्रतिसम्वत्सरश्राद्धं प्रथमवार्षिकं। स्मृतिः असंक्रान्तेपिकर्तव्यमाब्दिकंप्रथमंबुधैः-असंक्रान्ते संक्रातिशून्ये मलमासे इतियावत्। लघुहारीत:

प्रत्यब्दंद्वादशेमासिकार्य्यापिण्डक्रियाबुधैः क्वचित्त्रयोदशेऽपि-
स्यादाद्य मुत्कातुवत्सरं । प्रत्यब्दं प्रतिवर्षं पिण्डक्रियासाम्व-
त्सरिकं क्वचित् एकादशमासिककालाभ्यन्तरेमलमासपाते-
आद्य मुत्कातु वत्सरमिति मरणदिनमारभ्य द्वादशमासस्य
मलमासत्वे मलमास एव द्वादशेमासिक्षयाह्ने प्रथमवार्षिक-
मिति तात्पर्यम् नचैवं सति आश्विनकृष्णामावास्यायांमृत-
स्याग्रिमभाद्रस्यमलमासत्वे द्वितीयभाद्रकृष्णामावास्यायामे-
वोक्तरित्या प्रथमवार्षिकं तस्याश्विनत्वाभावात् भाद्रोल्ले-
खादाश्विनोल्लेखासङ्गतिरितिभूमितव्यं शुक्लादिरीत्यामरण-
तिथेः कृष्णादिरीत्यामलमासीयामावास्यायाभाद्रीयामावास्या-
त्वात् नभाद्रोल्लेखासङ्गतिरिति ॥ आश्विनशुक्लप्रतिपन्मृत-
स्याग्रिमभाद्रस्य मलमासत्वे तु एकादशमासिककालाभ्यन्तरे
मलमासपातात्तत्रमासिकवृद्धावश्यकत्वादग्रे आश्विनशुक्ल-
प्रतिपद्येव प्रथमवार्षिकं एवं आश्विनशुक्लद्वितीयादिपूर्णिमान्ते
मृते अग्रिमभाद्रस्य मलमासत्वेऽपि एकादशमासिककालाभ्य-
न्तर एव मलमासपातात् तत्र तत्रापि आश्विनशुक्लद्वितीयादि
मरणतिथावेववार्षिकमित्यवगन्तव्यं इति सर्वंसुस्थं मलमासे
यो म्रियतेतस्यापि पञ्चदशमासिकानिभवन्तीति रुद्रधरः तेन
तत्रापि सप्तदशश्राद्धमेवभवति त्रयोदशेमासि मरणपक्षति-
थौवार्षिकं एतावत्समुदायार्थपर्य्यालोचनयायमर्थः पर्य्यव-
सितः एकादशमासिककालाभ्यन्तरे मलमासे सम्भाव्यमाने
सप्तदशश्राद्धंसङ्कल्प्यकर्तव्यम् त्रयोदशेमासिमरणतिथौ वा-
र्षिकंद्वादशमासस्य मलमासत्वे तु न मासिकवृद्धिः तेन षोड-

शश्राद्धमेव तत्र प्रथमवार्षिकं मलमास एव क्षयाहे द्वादशे-
मासि तत्र शुक्लादिमासपरिग्रहेण उत्तरमासीयकृष्णपक्षस्य
पूर्वमासीयकृष्णपक्षत्वान्मासोल्लेखासङ्गतिरपि नास्तिद्वितीया-
दिवार्षिकन्तु मलमासपाते सर्वदैवत्रयोदशे मासिक्षयाहे प्रथ-
मवैशाखशुक्लपक्षमृतद्वितीयवैशाखकृष्णपक्षमृतयो र्म्मासिक
वृद्धावश्यकत्वान्तत्तन्मरणपक्षएववार्षिकंव्युत्क्रमेण वार्षिकम-
किंचित्करं इति व्रत पद्धत्यादिसम्मतो व्यवहारसिद्धश्च-
पन्थाः॥ गोकुलनाथोपाध्यायास्तु। संवत्सराभ्यन्तरेयद्यधि-
मासपातः स्यात्तदामासिकार्थंदिनमेकंवर्द्धयेदिति। विष्णुसू-
त्रेऽधिमास पातशब्देन पौर्णमास्यन्तक्षणप्रतिपदाद्यक्षणोभय
घटितलवेंन सहमध्यमचिन्हसम्बन्धोविवक्षणीयः। तथा सत्ये-
वाधिमाससम्बन्धोव्यवहरणीयो। न तु पूर्वापरः चिह्नमात्रेण
अन्यथा विष्णु सूत्रस्थपातपदोपादानवैयर्थ्यप्रसङ्गात् अत एव
इन्द्राग्नीयत्रहुयेतइत्यादिलघुहारीतवचनेव्यावर्त्तकस्य मध्य-
मचिह्नस्याभिधानमपि सङ्गच्छते एतेनैषमोद्वीतीयभाद्रकृष्णप-
क्षेमृतस्याग्रिमवर्षेआश्विनकृष्णपक्षेप्रथमाब्दिकंप्रसज्येत इति-
मासोल्लेखासङ्गतिरितिपरास्तम्। कृष्णपक्षस्य तस्यसंवत्सरा-
भ्यन्तरे निरुक्तमध्यमचिह्नसम्बन्धात्मकाधिमासपाताभावात्।
अत एव मलमासशुक्लपक्षमृतानामेवमासिकवृद्धिः न तु मल-
मासकृष्णपक्षमृतानामपीति। एवं चाश्विनकृष्ण पक्षमृतस्या-
ग्रिमभाद्रस्यमलमासत्वे सम्वत्सराभ्यन्तरेनिरुक्ताधिमासपाता-
दाश्विनकृष्णपक्ष एवप्रथमाब्दिकं नतु द्वितीयभाद्रकृष्णपक्षे-
इतिनमासोल्लेखासंगतिर्न्नवाविष्णुसूत्रस्थ संवत्सरपदस्यैका-

दशमासिककालोपलक्षकत्वमिति प्राहुरित्येतद्विषयविस्तारो-गोकुलनाथोपाध्यायकृतमासमीमांसायांद्रष्टव्यः ॥ ज्योतिषे प्रतिसम्वत्सरं श्राद्धमशौचात् पतितं च यत् मलमासेपि कर्त-व्यमिति भागुरिरब्रवीत् तथावाशौचेन साम्वत्सरिकश्राद्धप्र-तिरोधेऽशौचान्ते मलमासेपिकर्तव्यमिति भावः । ऋष्यशृङ्गः देयेपितॄणांश्राद्धेवैअशौचञ्जायतेयदि अशौचे तुव्यतीतेवैतेषां-श्राद्धम्प्रदीयते अशौच प्रयत्नानयने यं अन्यस्य श्राद्धदिने शौचविधिना निरासात् इतिपितृभक्तिः यद्यपि पितॄणामिति बहुवचनं तथापि मृताहश्राद्धविषयमिति सम्प्रदायः अशौ-चान्ते कुत्रकर्तव्यमित्याकांक्षयामाह शुचोभुतेनदातव्यंयातिथि प्रतिपद्यते सातिथिस्तत्रकर्तव्यानत्वान्यावैकदाचनेति श्री-दत्तः तथा चाशौचान्तद्वितीयदिने श्राद्धं कर्तव्यं एकभुक्तादि-नियमस्तु अशौचान्तिमदिन एव तत्राशौचस्यतन्त्रत्वात् एका-दशाह श्राद्धवत् एवञ्चाशौचान्तद्वितीयदिने या तिथिः प्रा-प्यते तदुल्लेख एव सङ्कल्पवाक्येकर्तव्यःनतुक्षयाहतिथेः या तिथिः प्रतिपद्यते इति प्रागुक्तात् अत्र सङ्कल्पमाह द्वैतपरि-शिष्टंओँ अद्येत्यादि क्षयाहे प्रतिबन्धकाशौचव्यपगमे अमु-कगोत्रस्यामुकशर्मण इत्यादि रजोयोगेन श्राद्धप्रतिरोधे रजो-योगात् पञ्चमदिने स्त्रियाश्राद्धं कर्तव्यं दैवे कर्मणिपित्रेच-पञ्चमेहनिशुध्यतीति वचनात् सङ्कल्पस्तत्रापि पूर्ववत् क्षया-हाज्ञानविस्मरणरूपप्रतिबन्धेन क्षयाहे श्राद्धाकरणे श्राद्धकाल-माह लघुहारीतःश्राद्धविघ्ने समुत्पन्नेक्षयाहेऽविदि तेतथाएका-दश्यांप्रकुर्वीतकृष्णपक्षेविशेषतः । मृताहाज्ञाने आह प्रचेताः

अविज्ञाते मृताहे अमावास्यायां श्रवणदिवसे वा श्राद्धं कर्त्त-व्यमितिशेषः पितृभक्तौ ॥ श्रीदत्तस्तु मृताहविशेषं ज्ञानत एवाद्य मृताह इति विस्मरणश्राद्ध विघ्नमेवबोद्धव्यम् अय-मर्थः विस्मृतश्राद्धमेकादश्यामेव कर्तव्यम् अज्ञातमृताह-श्राद्धंत्वेकादश्याममावास्यायां श्रवणदिवसेवेति विशेषः प्रागुक्तहारीतप्रचेतो वचनेऽभिधाय श्राद्धचिन्तामणिः यस्मिन्दिने देशान्तरमृतः श्रूयते स एवश्रवणदिवसः अत्रएकादश्यमावास्ये विघ्ननिमित्ता व्यवहिते ग्राह्ये मासज्ञाने तु सांवत्सरिके कर्त्तव्ये तन्मासस्यैव एकादश्यादिमासपक्षयोरज्ञाने यत्र मासि श्रूयते तस्यैव एवं च मृताहविस्मरणेप्येकादश्यामेव क्षयाहस्याविदितत्वादिति ॥ तदयं संक्षेपः ॥ श्राद्धविघ्नएकादश्यां तिथ्यज्ञाने तत्पक्षज्ञाने तत्पक्षैकादश्यांतिथिपक्षयोरज्ञाने तन्मासस्यैकादश्याममावास्यायां वा एषामज्ञाने यस्यां तिथौ मृतः श्रूयते तस्यामेव तत्तिथेरपि विस्मरणेतन्मासस्यैकादश्याममावास्यायां वा एकोद्दिष्टं श्रवणमासस्यापि विस्मरणेन-कार्य्यं मानाभावादिति । शुद्धिचन्द्रिकायां रघुपतिमिश्रस्तु श्राद्धविघ्ने क्षयाहे दैवादकरणे क्षयाहाज्ञाने च एकादश्यां-कर्त्तव्यं पक्षाज्ञाने कृष्णपक्षे कर्तव्यमित्यर्थः मासाज्ञाने चैत्रे इदन्तु एकोद्दिष्टश्राद्धपरमन्यथा आद्यश्राद्धकरणैकादश्यान्त-स्कृत्वा पूतस्स्यात् कथमन्यथागयाश्राद्धं विनातस्य पातित्य-मिति प्रागुक्तहारीतप्रचेतोवचनेऽभिधाय स्मृतिसारे तु अत्र च मृताहाज्ञानमद्यमृताह इति विस्मरणं श्राद्धविघ्नमेव बोद्धव्यम् अविदित इति विस्मरणमपि गृहीतन्तस्याप्यज्ञानरूप-

त्वात् प्रचेतो वाक्येतुश्रवण इत्यभिधानात्तिथिविशेषज्ञानमेव विवक्षितमिति ।

विष्णुपुराणे तु चतुर्द्दश्यष्टमीषष्ठीअमावास्याथपूर्णिमा पर्वाण्येतानिराजेन्द्ररविसंक्रान्तिरेवच तैलस्त्रीमांससम्भोगीपर्वस्वेतेषुवैपुमान् विण्मूत्रभोजनंनामप्रयातिनरकेमृतः अत्र तैलं तिलभवं तेन शार्षपादितैले पक्वतैलेचन दोष इति व्रतपद्धतौ रुद्रधरः ॥

अथजन्मदिनकृत्यम् अत्रभोजराजः यो जन्ममासेक्षुरकर्मयात्रांकधर्णस्यवधंकुरुतेहिमोहान्नूनंसरोगन्धनपुत्रना शंप्राप्नोतिमूढोवधबन्धनानिक्षुरकर्मनकुर्वीतजन्ममासेच जन्मभे जन्ममासेउपनयनविधानात्तदङ्गसशिखावपने न दोष इति स्मार्ताः श्रीपतिव्यवहारसमुच्चये स्नानंदानंतपोविद्यासर्वमङ्गल्यवर्द्धनम् उद्वाहश्चकुमारीणांजन्ममासेप्रशस्यते मङ्गल्यवर्द्धनमुपनयनादि । जन्मदिनेकर्तव्यमाह तिलोद्वर्तीतिलस्नायीतिलहोतातिलप्रदः तिलभुक्तिलवा पीचषट्तिलोनावसीदति तथाच जन्मदिने तिलोद्वर्तनादि षट्करणीयम् तत्राश्वत्थामाबलिव्यासहनुमद्विभीषणकृपपरशुरामजन्मनक्षत्रप्रजापतिमार्कण्डेयाः क्रमेण पूज्याःततोवरंप्रार्थयेत् ओँमार्कण्डेयमहाभागसप्तकल्पान्तजीविनम् चिरजीवीयथात्वंभोभविष्यामितथामुने इति ततः समधुरदुग्धपानमानेन ओँसतिलंगुडसंमिश्रमञ्जल्यर्द्धमितंपयः मार्कण्डेयवरंलब्ध्वापिबाम्यायुष हेतवे इति । अस्मिन् दिने आमिषभोजन मैथुनं क्षौराध्वगमनहिंसादिकं विवर्ज्जयेत् ।

अथ वास्तु तच्च व्रतपद्धतौ यथा कार्तिकाग्रहणफाल्गुन-वैशाखश्रावणाः शुक्लपक्षः रिक्तामावास्याभिन्नतिथयः रोहि-णीमृगशिरापुनर्वसूपुष्यउत्तर फाल्गुनोहस्तादित्रय मनुराधा ज्येष्ठा मूलोत्तराषाढश्रवणादित्रयउत्तरभाद्ररेवत्योनक्षत्राणि सो-मबुधगुरुशनिशुक्रवाराः प्रशस्ताःतत्र गृहे हस्तमात्रं खातं खनित्वाजलेनापूर्य्य तज्जले गणपतिवास्तोः पति अष्टनागध-रित्रीः पूजयेत् तत्र धरित्र्यर्घदानमन्त्रः हिरण्यगर्भेवसुधेशे-षस्योपरिशायिनि वसामितवपृष्ठेहंगृह्णाणार्ध्यंधरित्रिमे । इति ततो दधिभक्तामूपल्लववहुआरपल्लवान् गर्त्ते प्रक्षिप्य मृत्ति-काभिः पूरयेत् ॥

अथसंक्षेपतआन्हिकम् तत्र मनुः मूत्रोच्चारसमुत्सर्गंदि-वाकुर्य्यादुदङ्मुखः दक्षिणाभिमुखोरात्रौसन्ध्ययोश्चय थादिवा छायायामन्धकारेवारात्रावहनिवाद्विजः यथासुखमुखःकुर्य्या-त्प्राणवाधाभयेष्वपि। उच्चारोविष्ठासमुत्सर्गस्त्यागः वाधा-भयेषु व्याघ्रादिकृतविनाशभयेषु पराशरः नियम्यप्रयतोवाचं-सम्वोताङ्गोवगुण्ठितः लैङ्गे पवित्रंदक्षिणेकृत्वाविण्मूत्रंचसमु-त्सृजेत् पवित्रं यज्ञोपवीतमिति महेशादयः दक्षिणेइति कर्ण इति शेषः। विट् विष्ठा मिताक्षरायाम् गृहीतशिश्नश्चोत्थाय-मृद्भिरभ्युद्धृ तैर्जलैः गन्धलेपक्षयकरंशौचंकुर्य्यादतंद्रितः अतन्द्रितोऽनालसः उद्धृतैरित्यनेनजलान्तः शौचनिषेध इति शौचे मनुः एकालिङ्गे गुदेतिस्त्रस्तथैकत्रकरेदश उभयोः सप्त-दातव्यामृदःशुद्धिमभीप्सता एकत्रकरेवामकरेइत्यर्थः उभ-योरितिहस्तद्वयेरितिशेषः। बृहन्नारदीये तिस्त्रस्तिस्रःप्रदातव्याः

पादयोर्मृत्तिकापृथक् यदि तूक्तशौचेनापि गन्धलेपक्षयो न भवति तदा यावदपेत्यमेध्याक्तादितिवचनात् अधिकसंख्या अपि मृद्दातव्या इति कुलूकभट्टः मृत्तिकालेपक्षयपर्य्यन्तं जलं दद्यात् प्रयोगपारिजाते कुर्य्याद्द्वादशगंडूषान् पुरीषोत्सर्जनेद्विजः मूत्रेचत्वारएवोक्ताभोजनान्तेचषोडश पुरीषं विष्टा आचमने मनुः हृद्गाभिः पूयतेद्विप्रःकण्ठगाभिस्तुभूमिपः वैश्योद्भिः प्राशिताभिस्तुशूद्रःपृष्ठाभिरन्ततः अद्भिःजलैः मनुटीकायां-षट्छिद्राणिजलेनस्पृशेत् स्तनिश्शिरःस्थानि घ्राणचक्षुःश्रोत्रादीनि ग्रहीतव्यानि शुद्धिविवेकेयमः प्रयान्त्या च मतांया स्तुशरीरेविप्लुषोनृणां उच्छिष्टदोषोनास्त्यत्र भूमितुल्यास्तुताः स्मृताः। विप्लुषोजलविन्दवः। दन्तकाष्ठे मिताक्षरायां कण्टकीक्षीरवृक्षोत्थंद्वादशांगुलसम्मितम् कनिष्ठिकाग्रवत्स्थूलं-पर्वार्द्धकृतकूर्चकम् दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिकातथा वृक्षोत्थमित्यनेन लोष्टूतृणांगुल्यादिनिषेधः नारसिंहे अपामार्ग-श्चबिल्वंचअर्क्वश्चोदुम्बरस्तथा बदरीतिन्दुकास्त्वेतेप्रशस्तादंत-धावने अपामार्गः चिर्चिरी इति प्रसिद्धः स्कान्दे आम्रातकंच-धात्रीणामेकोनखदिरोद्भवम् क्षीरवृक्षोद्भवंचापिप्रशस्तंदन्त-धावने विष्णुः नपलाशंदन्तधावनंस्यान्नश्लेष्मातकारिष्टविभीतकधरकोविदारशमीविल्वपिप्पलेंगुदगुग्गुलम् श्लेष्मातकः वहुआर इति ख्यातः अरिष्ट हरिड इति प्रसिद्धम् कोविदारः कोइआर इति ख्यातः बिभीतकं वहेरि इति प्रसिद्धम् इंगुद-स्तापसतरुरित्यमरः। गर्गः कुशाङ्काशम्पलाशंचशिंशपांयस्तु-भक्षयेत् तावद्भवतिचाण्डालोयावद्गंगांनपश्यति। उशनाः

कार्पासन्दन्तकाष्ठश्चविष्णोरपिहरेच्छ्रियं प्रतिपद्दर्शषष्ठीषुनव-
म्यांश्राद्धवासरेदन्तानाङ्काष्ठसंयोगोदहत्यासप्तमंकुलम् अन्यच्च
समिधाक्षीरवृक्षस्यक्षयाहोपोषणंविना दन्तकाष्ठंकुर्यादिति शे-
षः। क्षयाह पदं श्राद्धमात्रदिनोपलक्षकम् उपोषणपदमुपवास-
दिनस्य तदुषसोप्युपलक्षकम् विष्णुः उदङ्मुखः प्राङ्मुखोवा-
दद्यात्दन्तकाष्ठमित्यादि। दन्तधावनमन्त्रस्तु स्मृतिसारे आ-
युर्बलंयशोवर्च्चःप्रजाः पशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोधेहि-
वनस्पते। दन्तकाष्ठप्रमाणमाह द्वैतपरिशिष्टेवितस्तिः प्रथमः
कल्पःप्रादेशप्रमाणंमध्यमः अष्टांगुलमपकृष्टः चतुरंगुलमत्यन्ता-
पकृष्टः। जाबालःद्वादशांगुलविप्राणांक्षत्रियाणांनवांगुलम् स-
प्तांगुलंचवैश्यानांशूद्राणांचषडंगुलमिति ततस्नानं छन्दोगप-
रिशिष्टे यथाहनितथाप्रातर्नित्यंस्नायादनातुरः अनातुर इति
विशेषणादातुरस्य ज्वराद्यभिभूतस्य स्नानाकरणे न दोषः मनुः
शिवलिङ्गसमीपस्थंयत्तोयंपुरतःस्थितम् शिवगङ्गेतितत्प्रोक्तंत-
त्रस्नात्वादिवंव्रजेत्दिवंमुक्तम्। योगियाज्ञवल्क्यः नद्यांस्नाना-
निपुण्यानितडागेमध्यमानिच वाकीकूपेजघन्यानिगृहेप्रत्यवरा-
णिच नद्यामपि प्रथमं महानद्यान्तदसम्भवेऽल्पनद्याम् महान-
द्यस्तु ब्रह्मपुराणोक्ताः गोदावरीभीमरथीतुङ्गभद्राचवेणिका ता-
पीपयोष्णीविन्ध्यस्यदक्षिणेचप्रकीर्त्तिताः भागीरथीनर्मदाचय-
मुनाचसरस्वती विशोकाचवितस्ताचविंध्यस्योत्तरसंस्थिताः द्वा-
दशैतामहानद्योदेवर्षिक्षेत्रसंभवाः। नदीलक्षणं तु श्रावण-
कृत्येऽभिहितम् सप्रवाहजले प्रवाहाभिमुखेन तदन्यजले सू-
र्य्याभिमुखेनस्नानम् तथाहि नारसिंहे नद्यांसूवत्सुचस्नायात्प्र-

तिस्त्रोतः स्थितोद्विजः तडागादिषुतोयेषुप्रत्यर्कंस्नानमाचरेत् प-
रखानित खाते पंचपिण्डमृत्तिकामुद्धृत्य स्नायात् तथाहि यो-
गियाज्ञवल्क्यः पञ्चपिण्डाननुधृत्यनस्नायात्परवारिणि । मनुः
स्मृत्वोंकारञ्चगायत्रींनिबध्नीयाच्छिखां ततः ॥ इति स्नानान्त-
रम् । ब्राह्मे योगोदानंतपोहोमः स्वाध्यायःपितृतर्प्पणम् भस्मी-
भवतितत्सर्वमूर्द्ध्वपुण्ड्रम्विनाकृतम् भारते जान्हवीतीरसम्भूता-
मृदंमूर्ध्नाबिभर्तियः बिभर्तिरुपमर्कस्यतमोनाशायकेवलम् ब्राह्मे
ऊर्द्ध्वपुण्ड्रं मृदाकुर्य्यात्त्रिपुण्ड्रम्भस्मनासदा तिलकंवैद्विजःकु-
र्य्याच्चन्दनेनयदृक्षया मृदा गङ्गामृदा पाद्मे अभा वेउदकेना-
पिपौण्ड्रञ्चैतत्समाचरेत्द्विजइत्यभिधानाच्छूद्रस्य नोर्द्ध्वपुण्ड्रं
किन्तुविन्दुमात्रम् तथाहि बृहद्धर्मसंहितायां व्यासः तिलकं
बिन्दुमात्रन्तुशूद्रजातिषुशस्यते इति गोपीचन्दनमुद्राञ्चकृत्वा
भ्रमतिभूतले सोपिदेशोभवेत्पूतकिंपुनर्यत्रसंस्थितः पाद्मे कृ-
ष्णनामाक्षरैर्गात्रङ्कल्पयेच्चन्दनादिना सलोकपावनोभूत्वातस्य
लोकमवाप्नुयात् तस्य कृष्णस्य भगवानुवाच ममावतारचिन्हा
निदृश्यंतेयस्यविग्रहे मर्त्योनमर्त्योविज्ञेयस्तत्तनूं मामकीतनुः
विग्रहंशरीरम् शरीरम्वर्ष्मविग्रहइत्यमरकोषात् ॥

अथ सन्ध्या सा च नित्या तत्र मनुः नानुतिष्टतियःपूर्वां-
नोपास्तेयश्चपश्चिमाम् सशूद्रवद्बहिःकार्यस्सर्वस्माद्द्विजकर्मणः
पूर्वां प्रातः सन्ध्यां पश्चिमां सायं सन्ध्यां योगि याज्ञवल्क्यः
सन्ध्यात्रयम्प्रकर्तव्यंद्विजेनात्मविदासदा सम्वर्तः प्रातस्संध्यां-
सनक्षत्रामुपासीत यथाविधि सादित्यांपश्चिमांसन्ध्यामर्द्धा-
स्तमितभास्कराम् उत्तीर्यवाससी परिधायेति कात्यायनवच-

नात् वाजसनेयिभिः स्थले सन्ध्याप्रकर्तव्या स्थलाशुचित्वप-क्षे जलेपि यत्राशुचिस्थलंवास्यादुदकेदेवताःपितृन्तर्प्पयेत्तुय-थाकाममप्सुसर्वम्प्रतिष्ठितमिति वचनात् उदीच्यस्य तर्प-णस्य जलेभिधानादिति केशवमिश्राःछन्दोगानामनियमः गाय-त्रीजपे मनुः गायत्रीयोनजानातिज्ञात्वानैवउपासते नामधार-कविप्रोसौनविप्रोवृषलोहिसः वृषलः शूद्रः जपस्तुशुक्लवस्त्रेण स्थले नजले तथाहि गोभिलः कदाचिदपिनोविद्वान् गायत्री मुदकेजपेत् गायत्र्याग्निमुखोप्रोक्तातस्मादुत्थायतांजपेत् उत्थाय सूर्य्याभिमुखो जपेदिति छन्दोगान्हिकम् ॥

अथ जपक्रममाह योगियाज्ञवल्क्यः प्रणवं पूर्वमुच्चार्य्य-भूर्भुवः स्वस्ततः परम् गायत्रीप्रणवश्चान्तेजपरस्त्वेवमुदाहृतम् प्रणवम् उंकारम् तथाच प्रणवं व्याहृतिः गायत्री पुनः प्रणव-मन्ते एवंक्रमोजपे तत्र दशवारजपो शौचेपि कर्तव्यः तत्राश्व-लायनः आपन्नआशुचिः कालेतिष्ठन्नपिजपेद्दश अशुचिरेवा-शुचिः तिष्ठन्नुत्तिष्ठन् नित्यत्वान्मलमासेपि दशवारजपः मात्स्ये गृहेत्वेकगुणःजप्यन्नद्यांतुत्रिगुणंस्मृतम् तीर्थेषुशतसाहस्रमन-न्तंशिवसन्निधौ जपे गुठिकामाह पाद्मे शतधाशङ्खपाद्माभ्यांम-णिभिस्तुसहस्रधा पुत्रञ्जीवेनशतधाफलं स्यान्मन्त्रजापिनाम् पु-त्रञ्जीवः पितडञ्जिया इति प्रसिद्धः शङ्खःशतंस्याच्छङ्खमणिभिः सहस्रन्तुप्रवालकैः स्फाटिकैः दशसाहस्रम्मौक्तिकैर्लक्षमुच्यते पद्मा क्षैर्दशलक्षन्तुसौवर्णैः कोटिरुच्यते कुशग्रन्थाचरुद्राक्षैर-नन्तम्फलमुच्यते प्रवालो मुगा इति प्रसिद्धः शिवपुराणे अष्टोत्तरशतंन्त्वैवपञ्चपंचाशदुत्तरम् अष्टाविंशतिभिर्वापिकार्य्या-

रुद्राक्ष मालिका गुटिकाप्रमाणमाह जातीफलप्रमाणेनजप्य-म्महदुदाहृतम् बदरास्थिप्रमाणेनस्वल्पकन्तदुदाहृतम् जाती-फल जायफरइति प्रसिद्धा करंजपोऽष्टोत्तरशतपर्य्यंतमेव नतु तदधिकं जप्यम् ।

अथ करजपक्रममाह अगस्त्यसंहितायाम् आरभ्याना-मिकामध्यात्प्रादक्षिण्येनवैक्रमात् तर्जनीमूलपर्य्यन्तञ्जपेद्द-शसुपर्वसु ॥

अथ तर्प्पणम् तत्रमृतपितृकस्याधिकारः जीवत्पितृकस्य मृतमातृकस्य च देवर्षितर्प्पणेचाधिकारः पितुः सन्यासादिना पातित्येन वा तर्प्पणानर्हत्वे जीवत्पितृकोपि पितामहादि-तर्प्पणं कुर्य्यात् तथाहि याज्ञवल्क्यः यदिस्याज्जीवत्पितृकए-तान्दिव्यांपितृ स्तथा येभ्योवापिपितादद्यात्तेभ्योवापिचदाप-येत् ब्राह्मणादिहतेतातेपतितेसङ्गवर्जिते व्युत्क्रमाच्चमृतेदेयं-येभ्यएवददात्यसौ इतिकात्यायनेनापि तस्य पितामहोपक्रमप्र-तिपादनात् पितुरसत्वेचसुतरामिति द्वैतपरिशिष्टं तर्प्पणमुप-क्रम्यवर्द्धमानः विनारूप्यसुवर्णाभ्यांविनाताम्रतिलैस्तथा वि-नादर्भैश्चमन्त्रैश्चपितॄणांनोपतिष्ठते द्वैतनिर्णये जपेहोमेतथा-दानेस्वाध्यायेपितृतर्प्पणे अशून्यन्तुकरंकुर्य्याद्धिरण्यरजतैःकु-शैरिति वचनात् दक्षिणहस्तानामिकायांहिरण्यरजतकुशा-धार्य्याः देवीपुराणे अनामिकायान्तद्धार्य्यन्दक्षिणस्य करस्य-चेति तर्जन्यांरजतन्धार्य्यमिति प्रवादोनिर्मूल एव स्मृतिः तर्प्पयेद्देवतानाञ्चसव्यंकृत्वासमाहितः अधिकारोभवेत्पश्चा-त्पितॄणांतर्प्पणेद्विजाःअन्वारब्धेनसव्येन पाणिनादक्षिणेनतु

तृप्यतामितिसेक्तव्यन्नामगोत्रेणवाग्युतैः सव्येन वामेन तथो च वामहस्तयुतदक्षिणहस्तेन तर्प्पयेदिति भावः स्मृतिः कायस्थै-र्यस्तिलैर्मोहात्करोतिपितृतर्प्पणं तर्प्पितास्तेनपितरस्त्वङ्मां-सरुधिरास्थिभिः कायस्थैः अङ्गस्थैः अङ्गस्थैर्नतिलैःकुर्य्याद्देव-तापितृतर्प्पणम् रुधिरन्तुभवेत्तोयम्प्रदाताकिल्बिषीभवेत् इति वचनैकवाक्यत्वात्तर्पणं स्थले एव न जले तथाहि कात्ययनः ऊत्तीर्य्यवाससी परिधायेति अन्यच्च उदकेनोदकंकुर्य्यात्पि-तृभ्यश्चकदाचन उत्तीर्य्यचशुचौदेशेकुर्यादुदकतर्पणमिति स्थला-शु चित्वे जलेपि इत्यनुपदमुक्तं प्राक् वाजसनेयिनामिदम् छन्दो-गानामनियमः कुशोपरितर्प्पणन्न तु भूमौ तथा च तीर्थचि-न्तामणौ आस्तीर्यचकुशान्साग्रान्तानावाह्यचमन्त्रतः प्राचीना-ग्रेषुदेवांस्तुदक्षिणाग्रेषुवैपितॄन् देवान्पितॄंस्तथाचान्यान्सन्त-र्प्याचम्यवाग्यतः भूम्यांयद्दीयतेतोयन्दाताचैवकुलेस्थितः वृ-थातन्मुनिशार्दूलनोपतिष्ठतिकस्यचित् स्थलेस्थित्वाजलेयस्तुप्र-यच्छेदुदकन्नरः नोपतिष्ठेत्पितॄणान्तुसलिलंतन्निरर्थकम् पात्रे तर्पयेत्तिलतोयाभ्यांसम्यगञ्जलसंख्याया एकैकमञ्जलिन्देवा-द्वौद्वौचशनकादयः अर्हन्तिपितरस्त्रींस्त्रीन्स्त्रियन्त्वेकैकमञ्जलि-मिति एतेन पित्रादिषट्पुरुषेषुप्रत्येकमञ्जलित्रयम् तद्भिन्ना-नामेकैकमञ्जलिमिति अमुकगोत्रः पिता अमुकशर्मा तृप्य-तामिति वाक्यम् तथाहि गोभिलः शर्मन्नर्घादिकेकार्य्यंश-र्मातर्पणकर्मणि शर्मणोक्षय्यकालेस्यादेवंकुर्वन्नमुह्यतीति अक्ष-य्यकालेऽक्षोदके अन्यच्च तृप्यतामितिसेक्तव्यनामगोत्रेणवा-ग्युतैः अत्र पुरुषषट्स्त्रीषट्कयोर्नित्यन्तर्पणमिति द्वैतनिर्णयः

स्मृतिः नोदकेषुनपात्रेषुनक्रुद्धोनैकपाणिना नोपतिष्ठतितत्तोयं-यद्भूमौनप्रदीयते भूमाविति भूमिस्थित कुश इत्यर्थः अतो न पूर्ववचनविरोधः गोतम नित्यंस्वाध्यायःपितृभ्यश्चोदकदानञ्च-यथोत्साहमन्यत् मनुः यदेवतर्पयेदद्भिःपितॄंस्नात्वाद्विजोत्तमः तेनैवसर्वमाप्नोतिपितृयज्ञक्रियाफलमिति वचनाभ्यामशक्त्या-दिना वैश्वदेवाद्यकरणेन दोषः काम्यत्वात् ॥

अथ पूजा तत्रव्यासः कौशेयङ्कम्वलञ्चैवअजिनम्पट्टमे-वचदारुजन्तालपत्रम्वाआसनम्परिकल्पयेत् कृष्णाजिनेज्ञानसि-द्धिर्मोक्षश्रीर्व्याघ्रचर्मणि कौशेयं कुशासनं अजिनं मृगादिचर्म दारुजं काष्ठसम्बन्धि शारदातिलके वस्त्रासनेरोगनाशं चित्रकं विष्टरंशिवे। व्यासः वंशासनेतुदारिद्र्यं पाषाणेव्याधिजं-भयं धरण्यांदुःखसंभूतिर्दौर्भाग्यंछिद्रदारुके तृणेधनयशोहानिः पल्लवेचित्तविभ्रमः। पंचोपचारमाह आचारचन्द्रोदये सपर्य्याबि-विधा प्रोक्तातासामेकांसमाश्रयेत् गन्धादिकानैवेद्यान्तापूजा पंचोपचारिकोसपर्य्यापूजागन्धादिकेतिगन्धपुष्पधूपदीपनैवेद्यैः पंचोपचारिकीत्यर्थः तत्रैव आसनंस्वागतंचार्घ्यम्पाद्यमाचमन-न्तथामधुपर्काचमनस्नानवसनाभरणानिच गन्धपुष्प धूपदीप-नैवेद्यं चन्दनन्तथा तथा च आसनादिषोडशभिः पूजाषोडशो-पचार इति भावः पराशरभाष्येशिवार्च्चनं सदाप्येवं शुचिःकु-र्य्यादुदङ्मुखः सदेति दिवसे रात्रौचेत्यर्थः शिवभिन्नसर्वदे-वकार्य्यंप्राङ्मुखः रात्रावुत्तरमुखःद्वैतपरिशिष्टे प्रातः प्राङ्मुखे-नेति पराशरभाष्ये रात्रावुदङ्मुखःकुर्य्याद्देवकार्य्यंसदैवहीति ॥

अथ पुष्पेविशेषमाह याचितन्निष्फलम्पुष्पंक्रयक्रीतन्तु-

निष्कलम् स्मृतिः परकीयारामजातैस्तुकुसुमै रर्च्चयेत्सुरान् ते-
नपापेनलिप्येऽहमिति आरामः पुष्पवाटिका एतन्निषेधः काम्य-
पूजायामेव नित्यपुजायान्तु चौर्य्येणापिपुष्पग्रहणे दोषःन
देवतार्थन्तुकुसुममस्तेयम्मनुरब्रवीत् इति वचनात् पारिजातं
जलम्पर्य्युषितन्त्याज्यम्पत्राणिकुसुमानिच तुलस्यागस्तिबि-
ल्वानांगाङ्गम्वारिनदुष्यति ज्ञानमालायाम् नपर्य्युषितदोषोऽ-
स्तिजलजोत्पलचम्पके तुलस्यगस्तिवकुलेविल्वगङ्गाजलेतथा न-
पर्य्युषितदोषोऽस्तिमालाकारगृहेषुच स्कान्दे पालाशन्दिनमेकं-
चपंकजंचदिनत्रयम् पंचाहविल्वपत्रंचदशाहन्तुलसीदलम् पा-
लाशमित्यादौपर्य्युषितत्वेन न दुष्टमिति सर्वत्रयोज्यम् अन्यच्च
एकाहन्तिष्ठतेजातोकरवीरमहर्न्निशम् जलजंसप्तरात्राणिष-
ण्मासन्तुलसीदलम् पूर्वदिने त्रोटितमुत्तरदिनेपर्य्युषितपदवा-
च्यम् भविष्ये समित्पुष्पकुशादीनिब्राह्मणःस्वयमाहरेत् शूद्रा-
नीतैःक्रयक्रीतैःकर्मकुर्वन्पतत्यधः विष्णुधर्मोत्तरे शमित्पु-
ष्पकुशादीनिवहतोनाभिवादयेत् वहतः उद्वहतः अभिवा-
दनं प्रणामादि कुशादीनीत्यादिपदाज्जलादिपरिग्रहः। तथा
दैवो परिधृतंयच्चवामहस्तेचयत्कृतम् अधोवस्त्रधृतंयच्चजले-
न्तःक्षालितञ्चयत्। देवतास्तन्नगृह्णन्तिपुष्पन्निर्माल्यताङ्ग-
तम्। अधोवस्त्रम्परिधानवस्त्रम् यदितिपुष्पमिति शेषः।
स्मृतिः स्नानंकृत्वातुयत्किंचित्पुष्पञ्चिण्वन्तिवैद्विजाः देवता-
स्तन्नगृह्णन्ति भस्मीभवतिदारुवत् इदन्त्वहःस्नानविषयम् प्रा-
तः स्नानानन्तरन्दक्षेणपुष्पमाहरण विधानादितिद्वैतपरिशिष्टे
नारदीये भृंगराजशमीविल्वतुलस्यामलकीतथा तमाल श्चहरी-

पूज्येपत्रषट्कंप्रशस्यते हरौ विष्णौपुष्पमालायाम् अपामार्गं शमीदूर्वाशिंशपातुलसीदलम् विल्वपत्रंमरुरकंशस्तञ्चखदिरं-हरेः अपामार्ग्गं चिरचिरी मरुरकं मरुआ इति प्रसिद्धम् तत्रैव कुन्दङ्कुब्जमकर्णिकारतिलकंसेवन्तिकायूथिका पुन्नागङ्कर-वीरनागवकुलन्द्रोणं यवापाटला इ जात्यौखदिरंकुसुम्भकमल-न्नोपङ्कुरुण्ठोत्पलम् मल्लोचम्पकमाधवोचकमिदंपुष्पंहरौश-स्यते । कुब्जकं कुआ कर्णिकारः कनैल सेवन्ती सेउती यूथिका यूही पुन्नागं नागकेशरं नोपं कदम्वंद्रोणं दनूफयवा उडहुल पाटलापाडरिकुरुण्ठः पीत पिअरी उत्पलं कोका इति प्रसिद्धम् । ज्ञानमालायाम् नाक्षतैरच्चयेद्विष्णुन्नतुलस्यागणा-धिपम् । गणाधिपो गणेशः । यवाकुन्दशिरीषैश्चयूथिकामाल-तोभवैः केतकीभवपुष्पैश्च नैवार्च्यःशङ्करःसदा । तथा गणेश-न्तुलसीपत्रैर्दुर्गान्नैव चदूर्वया मुनिपुष्पैस्तथासूर्यंलक्ष्मीका-मोनचार्च्चयेत् । मुनिपुष्पैः अगस्तिपुष्पैः । पद्मपुराणे माघे-चम्पकपुष्पेणयोऽर्च्चयेत्कमलापतिम् सगच्छेत्परमन्धामवि-मुक्तः सर्वपातकैः । स्मृतिः भूमिस्पृष्टन्नगृह्णीयात्सेफालींवकु लंविनासेफाली शृङ्गारहार इति बकुलं च भूमिस्थितमपि ग्राह्यम् अन्यत्पुष्पन्न भूमिस्थंग्राहमित्यर्थः । नदोषः कलिका-भङ्गे पद्मचम्पकयोरपीति वचनात्कमलचम्पकयोः कलिका-त्रोटने न दोषः ॥

अथ अष्टाङ्गादिप्रणाममाह हलायुधीये अष्टाङ्गउत्तमः-प्रोक्तःपञ्चाङ्गोमध्यमःस्मृतः दोर्भ्यांपद्भ्याञ्चजानुभ्यामुरसाशि-रसातथा मनसावचसादृष्ट्याप्रणामोऽष्टाङ्गईरितः । दोर्भ्यां-

मिति वाहुभ्या मित्यर्थः । पद्भ्यांकराभ्यांशिरसापञ्चाङ्गा-प्रणतिःस्मृता ॥

ततः कुलानुसारेण सप्तनवद्वादशादिनैवेद्यं दत्वा भोजनं कुर्य्यात् । वृहद्धर्म्मसंहितायां व्यासः नक्षीरंलवणन्दद्यान्न-चाम्रं गुडमेवच । क्षीरन्तथामिषंभुत्कानभुञ्जीतकदाचनआमिषं मांसं पठन्ति गव्यञ्चताम्रपात्रस्थम्मद्यतुल्यंघृतम्विना । विष्णु पुराणे अनभ्यर्च्य ऋषीन्देवान् पितृभूतातिथींस्तथा योभुङ्क्ते-तस्यसम्भाषात्पतन्तिनरकेनराः । अन्यच्च मौनेनैवतुयोभुङ्क्तेसं-यमेनदृढव्रतः एकविंशतिगोत्राणितारयेन्नरकार्णवात् । सम्वर्तः भुञ्जानश्चयदाम्रूयाद्गायत्र्यष्टशतञ्जपेत् । वृहद्धर्मसंहितायां व्यासः पंक्तिमध्येनमोक्तव्यम्पङ्क्तिन्नैर्वविलङ्घयेत् । पञ्चांगु-लीभिर्मोक्तव्यन्नांगुलीपृष्ठमालिह्येत् । पंक्तिमध्ये पंक्तिद्वयाभ्य-न्तरे वर्द्धमानः हारिद्रमासं हरिद्राजलावसिक्तं हरिद्रानल-पाचितं आत्मानंव्यापादति हारिद्रंमासं हारिअलपक्षिमासं व्यापादयति । नाशयति ज्योतिषे अमृतंसिद्धियोगाश्चयद्ये-कस्मिन्दिनेभवेत् तद्दिनन्तु भवेन्नष्टम्मधुसर्पिर्यथाविषम् इति मधुघृतमेकीभूतं विषमित्यायाति तच्चद्वयोः समा-नत्वे न्यूनाधिकत्वेतु नविषं वैद्यशास्त्रे तथैव लिखनात् । शूलपाणि धृतशङ्ख एकपंक्त्युपविष्टानाम्विप्राणांसहभोजि-नाम् यद्येकोपि त्यजेत्पात्रं शेषमन्नम्विवर्ज्जयेत् मोहादभुञ्जी-तयः पक्त्यामुच्छिष्टसहभोजनम् प्रायश्चित्तञ्चरेद्विप्रः कृच्छ्रं सा-न्तपनन्तथा इत्याह्निकम् ॥

अथ दाहादि मृतस्य दाहः श्राद्धाधिकारिणा तदनधिका-

रिणापि कर्त्तव्यस्तथैव शिष्टाचारात् अग्राह्यानग्नीनाह चाण्डा-लाग्नेश्चिताग्ने श्चसूतिकाग्ने श्चकर्हिचित् पतिताग्ने रमेध्याग्ने र्न्न शिष्टैर्ग्रहणंस्मृतम्। दाह्यशरीरलाभे तस्य तदलाभे तदस्थ्यांदा-हःतेषामप्यलाभे पर्णनरदाहः। आदित्यपुराणे अनाहिताग्ने र्दे-हस्तुदाह्योगृह्याग्निनापुनः तदलाभेपलाशोत्थैःपत्रैःकार्य्यःपुमा-नपि । शतैस्त्रिभिस्तथाषष्ट्या ३६० शरवृन्तैर्विधानतः । श्राद्धरत्ने दाह्यशरीरलाभे तदस्थिघृतेनाभ्युक्ष्य वस्त्रेणाच्छा द्यपूर्ववद्दहेत् । पूर्ववत् शरीरदाहवत् ॥

पर्णनरविन्यासप्रकारमाह गृह्यपरिशिष्टे आश्वलायनः शिरस्यशीत्यर्द्धकंतु ४० ग्रीवायान्तुदशैवतुवाह्वोश्चैव शतन्दद्यादं-गुलीषु तथादश उरसित्रिंशतंदद्याद्विंशतिंजठरेतथा । अष्टार्द्धं-शिश्नेदद्याद्द्वादशार्द्धं वृषणयोः उर्वौ श्चैवशतंदद्यात्रिंशतंजानु-जंघयोः । पादंगुलीषुदशंदद्या देतत्पत्रविकल्पनम् । वेष्टित-व्यस्तथायत्नात्कृष्णसार स्यचर्म्मणा ऊर्णासूत्रेणवध्वातुप्रलेप्त-व्यस्तथायवैः स्वपिष्टैर्ज्जलमिश्रैस्तुदग्धव्यश्चतथाग्निना इति । वृषणयोः अण्डकोशयोः ऊर्वोर्जंघयोः । द्वैतपरिशिष्टे ऽप्येवमा-पिप्रकारेण मृतानां सजातीयविजातीयानां विशीर्णावयवानां सन्निपातेन सर्वेषां दाहः कार्य्योमानाभा वात् नापि पितुरेव परिचायकाभावात् अत एव तदवस्थायां पितुरपि पर्णनरदाह एवेति पर्णनरदाहस्तु अशौचाभ्यन्तरे तत्रापि अष्टमदशमत्र-योदशाष्टाविंशतिदिने क्रमेण ब्राह्मणादिचतुर्णांपर्णनरदाहः शिष्टा चारात् तदसंभवे नवमादिदिने अशौचाभ्यन्तरे तत्रा-प्यसंभवे पक्षत्रयानन्तरममावास्यादौ कर्तव्यः तथाहि अशौ-

च्चमध्येयत्नेनदाहयेदुक्तयाहृतम् । दीपकलिकायांसुमन्तुः पर्ण-
नरं दहेन्नैवविनादर्शं कथंचन १ अस्थनामलाभेदर्शेतुततःपर्ण-
नरंदहेत् । एवंपर्णं दहेन्नैवप्राक्त्रिप क्षात्कथंचन पितृहामातृ-
हायस्मान्नदर्शेनदहेद्यदि कृष्णपक्षेपंचदश्यामष्टम्यांवासमा-
हितः एकादश्यांविशेषेण ततः प्रभृतिसूतकम् । त्रिरात्रंसर्व-
वर्णानामेषधर्मोव्यवस्थितः । अत्राशौचाभ्यन्तरे दाहे शेषा
शौचाहोभिःशुद्धिः पर्णनरदाहप्रयुक्तत्र्यहाशौचापेक्षयामरण-
प्रयुक्तदशाहाद्यशौचस्य गुरुत्वात् त्रिपक्षानन्तरं दाहे त्रिरा-
त्रम् चतुर्थदिने श्राद्धम् एवपर्णनरंदग्ध्वात्रिरात्रमशुचिर्भवेदि-
ति ब्रह्मपुराणात् तुल्यन्यायतया अस्थिदाहेपि त्रिरात्राशौचम्
यज्ञपार्श्वः पुत्राश्चेदुपलभ्येरन्तदस्थीनिकदाचन तदलाभेप-
लाशस्यसंभवेहिपुनःक्रिया हि यस्मात्तदलाभे अस्थ्यलाभे
तस्माद्यदिपुनरप्यस्थीनिप्राप्यन्ते तदा पुनर्दाहे त्रिरात्रा-
शौचे कर्तव्ये च पुनः पिण्डदानादिकमिति शुद्धिनिर्णये गो-
पालः मरणतिथिनिश्चये तस्यां वार्षिकम् तदनिश्चये पर्णनर-
दाहतिथाविति विभावनीयम् ॥

शतानन्द रत्नमालायां यमः गतस्यनभवेद्वार्त्तायस्यद्वाद-
शवार्षिकी प्रे तावधारणंतस्यकर्तव्यंसुतबान्धवैः । हेमाद्रि-
निबन्धे जातुकर्णः पितरिप्रोषितेयस्यवार्त्तानगृहमागता ऊ-
र्ध्वम्पंचदशाद्वर्षात्कृत्वातत्प्रतिरूपकम् कुर्य्यात्तस्यचसंस्कारंय-
थोक्तविधिनापुनः गतस्येत्यत्र पुंस्त्वन्नविवक्षितम् अन्यथास्त्रि-
यास्तादृशस्थले व्यवस्थानस्याद्वचनान्तराभावात् यथोक्तविधि-
ना प्रागुक्त पर्णनरदाहविधिना । अत्रद्वादशवर्षानन्तरमुख्य-

कालेतदसंभवेपंचदश वर्षानन्तरं गौणकालेपिकर्त्तव्यमिति-
तात्पर्य्यम् । पर्णनरदाहः कदाकर्तव्यमित्यत्राह स्मृतिः यन्-
मासयदहर्य्यां तस्तन्मासितदहःक्रिया दिनाज्ञानेकुहूस्तस्यआ-
षाढस्याथवाकुहूः । तस्यैति गमनमासस्येत्यर्थः तथा च यन्-
मासि यत्तिथौ पूर्वंगृहाद्देशान्तरं गतस्तन्मासि तत्तिथौ द्वादश-
वर्षाद्यनन्तरं पर्णनरदाहः तत्तिथेरज्ञाने तन्मासामावास्यायां
तन्मासाज्ञाने आषाढामावास्यायांदाहः । तत्तृतीयदिने क्षौरं
चतुर्थदिने आद्य श्राद्धम् पंचमदिने सपिण्डनमितिभावः ।
यमःजातूकर्णवचनेभिधाय अत्रदेशापेक्षया विकल्पमिति के-
शवमिश्राः । अत्रपर्णनरदाहतिथौ वार्षिकम् । मरणभ्रान्त्या-
कस्यचिद्दाहादौयदिसमायातितदानिरग्निश्चेत् रुद्रस्नपनंप्राजा-
पत्यव्रतंचकृत्वा साग्निस्तु आयुषोमिष्टिंकृत्वा सपूतोभवति ।
तथाहिवृहत् श्राद्धदर्पणे प्रेत श्राद्धं कृतंयस्यसचेदायातिमा-
नवः प्राजापत्यव्रतंकुर्य्याच्छान्तिं रुद्रसमुद्भवामिति एवंकृतेमृत-
भ्रांत्यायद्यागच्छेत्पुमान्क्वचित् कुर्य्यात्तलायुषीमिष्टिंपुनराधा-
यपावकमितिच । रुद्रसमुद्भवां रुद्राध्यायादिना शिवस्नपन-
रूपां प्राजापत्यानुकल्पोधेनुदानम् । तस्याप्यनुकल्पःकार्षापण-
त्रयलभ्यहिरण्यदानं अत्रपूर्वंचनं निरग्निविषयकंउतरवचनं
अग्निहोत्रिविषयकं तथाचाग्निहोत्रिभिन्नस्य मरणभ्रान्त्यदाहे-
कृते यदिसमायाति तदाप्राजापत्यंप्रायश्चित्तं रुद्रस्नपनरूपां
शान्तिं च कुर्य्यात् अग्निहोत्रिणस्ता दृशस्थले आयुषीष्टीः
अत एव श्राद्धविवेके एवं कृतेमृतभ्रांत्यायद्यागच्छेत्पुमान-
क्वचित् कुर्य्याद्यथायुषोन्त्विष्टि पुनराधा यपावकं साग्नेरिय-

मिष्टिःनिरग्नेस्तु शान्तिस्वस्त्ययनमन्यदितिश्राद्धविवेक इति सकलमैथिलव्यवहारसिद्धोयंपंथाः ॥

पद्मपुराणे ब्रह्मदण्डहतायेचयेचापिब्राह्मणैर्हता महापातकिनोयेचपतितास्ते प्रकीर्तिताः । पतितानांनदाहस्स्यान्नान्त्येष्टिर्नास्थिसंचयः । नाश्रुपातश्चपिण्डोवाकार्य्यंश्राद्धादिकं क्वचित् एतानिपतितानान्तुयः करोतिविमोहितः कण्ठोदकक्रियांकृत्वातप्तकृच्छ्रेणशुध्यति कण्ठोदकक्रियामथनादिका उदयक्रिया प्रमादतोदाहादि करणेप्रायश्चित्तंमत्कृतप्रायश्चित्त व्यवस्थायामवलोकनीयम् । गोभिलः गोभिर्विप्रैर्हतेचैवतथाचैवात्मघातके नैवाश्रुपातनंकार्य्यंसद्भिःश्रेयोभिकांक्षिभिः । गोभिर्हतं क्रीड़ादिभिर्गवाहतमिति शूलपाणिः अश्रुपातपदं दाहादीनामप्युपलक्षकम् ॥

तथा च प्रमादतोगवाहतस्य श्राद्धंकार्य्यमेव क्रीड़ादिभिरितिशूलपाणिलिखनात् प्रमादादपिनिश्शंकइत्यादि वक्ष्यमाणब्रह्मपुराणाच्च अंगिराः व्यापादयेदथात्मानंस्वयंयोग्न्युदकादिना । विहितंतस्यनाशौचंनाग्निर्नाप्युदकक्रिया यस्तुरोषादिनाहेतुनाग्न्यादिभि रात्मानं घातयति तस्याग्निदानाशौचक्रिया न कर्तव्येति रुद्रधरः यदि मरणेच्छांविना प्रमादादितो जलादौ म्रियते तदा दाहादि सर्वाः क्रियाः कर्त्तव्यास्तथाहि अङ्गिराः अथकश्चित्प्रमादेनम्रियेताग्न्युदकादिषु तस्याशौचंविधातव्यंकार्य्याचास्योदकक्रिया । प्रमादोऽनवधानता ब्रह्मपुराणे प्रमादादपिनिश्शंकस्त्वकस्माद्विधिदेशितः । शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः । चाण्डालेनाथवा-

चौरैर्निहतोयत्रकुत्रचित् । तस्यदाहादिकंकार्य्यं यस्मान्नपतितस्तुस इति ॥

अथसतोविधानम् । तत्रसहमरणम् अनुमरणं द्विविधं सती मरणं तत्रापि ब्राह्मण्याः सहमरणमेवनानुमरणम् तथाहि गोतमः पृथक्चितिं समारुह्यनविप्रागन्तुमर्हति अन्यासामेवनारोणांस्त्रोधर्मोयंव्यवस्थितः अन्यासांक्षत्रियाण्यादोनांस्त्रोधर्म्मः पृथक्पश्चाच्चितारोहणरूपः तथा च सहमरणंसर्वासां अनुमरणंचक्षत्रियाण्यादीनामेवेति भावः । ब्रह्मपुराणे देशान्तरेमृतेपत्यौ साध्वीतत्पादुकाद्वयम् निधायोरसिसंशुद्धाप्रविशेज्जातवेदसम् ऋग्वेदवादात्साध्वीस्त्रोनभवेदात्मघातिनी तत्पादुकाद्वयं पतिपादुकाद्वयम् जातवेदसं वन्हिम् पादुकाद्वयमिति तदीयवस्त्रादोनामप्युपलक्षकम् मृतेनपत्यासहवन्हिप्रवेशः सह मरणम् पतिदाहानन्तरं तदोयपादुकादिग्रहणपूर्वकवन्हिप्रवेशोनुमरणमिति पर्य्यवसितम् नारदोये बालापत्याश्चगर्भिण्येह्यदृष्टऋतवस्तथा रजस्वलाराजसुतेनारोहन्तिचितांशुभे अदृष्टऋतवः संकितगर्भाः तेनाप्राप्तऋतुकोऽपिगच्छतीतिशिष्टाचारः राजसुते इतिसगरमातुः संबोधनम् बालसंवर्द्धनं त्यक्त्वाबालापत्यानगच्छतीतिवचनात् बालसंवर्द्धनश्रुते रन्यतोबालसंवर्द्धनं चेत्तदा तस्या अप्यधिकारः एकांचितांसमासाद्यभर्तारंयानुगच्छति तद्भर्तुर्यःक्रियाकर्तासतस्याश्चक्रियांचरेदिति तु पिण्डदानपर्य्यन्तविषयम् श्राद्धस्य स्वस्वाधिकारिकर्त्तव्यत्वात् ॥ सतीभवनफलमाहाङ्गिराः मृतेभर्त्तरियानारोसमारोहेद्धूताशनम् सारुंधतोसमाचारास्वर्गलो-

केमहीयते तिस्रकोटयोर्द्धंकोटीचयानिरोमाणिमानवे तावंत्य-
ब्दानिसास्वर्गेभर्तारंयानुगच्छति सा स्वर्गे इत्यस्यमहीयते इति
पूर्वेणान्वयः व्यालग्राहीयथाव्यालंवलादुद्धरतेविलात् तद्वद्भ-
र्त्तारमादायतेनैवसहमोदते मातृकंपैतृकंचैवयत्रकन्याप्रदीयते
पुनाति त्रिकुलंनारीभर्तारंयानुगच्छति ब्रह्मघ्नोवाकृतघ्नो वामि
त्रघ्नोवापिमानवः तंवैपुनातिसानारीइत्याङ्गिरसभाषितम् त्रि-
कुलं मातृपितृपतिकुलम्तं तादृश पतिमित्यर्थः विष्णुः मृते-
भर्तरिब्रह्मचर्य्यंतदन्वारोहणं वेति अत्रप्रयोगमाह । शुद्धिनिर्ण-
ये गोपालः पुत्रादिना स्वगृह्योक्तविधिनाग्नौदत्तौ ज्वलद्भर्तृ चि-
तायां सह गन्त्री साध्वी स्नाता वाससी परिधाय कुशहस्ता
प्राङ्मुखी उदङ्मुखी वा ओं तत्सदिति ब्राह्मणैरुच्चरिते नारायणं
संस्मृत्यत्रमोद्या मुकेमास्यमुकेपक्षेमुकतिथावमुकगोत्रा श्रीअमु
कोदेवीअरुंद्धती समाचारत्व पूर्वंकस्वर्गलोकमहीयमानत्वपति
सहित क्रीडमानत्वब्रह्मघन् कृतघ्न पतिपूतत्वकामा भर्तृ ज्वल
च्चितारोहणमहं करिष्ये इति सङ्कल्पः सहमरणेऽनुमरणेभर्तृ
ज्वलच्चितारोहणमित्यत्र ज्वलदग्निप्रवेशनभर्तृ अनुमरणमिति
सङ्कल्पे विशेषः अष्टौ लोकपाला आदित्यचन्द्रानिलानलाकाश-
भूमिजलहृदया वस्थितांतर्य्यामिपुरुषदिनरात्रिसन्ध्या यूयं
साक्षिणोभवथ ज्वलद्भर्तृ चितासमारोहणे भर्त्रनुमरणे वा इत्यु-
च्चार्य्यचिताग्निं त्रिः प्रदक्षिणी कृत्य इमानारीरविधवा सपत्नी-
वांछनेसर्पिषासं विशंत्वनस्रवोऽमसीवासुरत्नो आरोहन्तु जलयो-
निमग्ने इति इमाः पतिव्रताः पुण्याःस्त्रियोजायाःसुशोभनाःसह
भर्तृ शरीरेण संविशन्तुविभावसुं इति ब्राह्मणम् नमो नम इत्यु

च्चार्य्यं ज्वलच्चितांसमारोहेत् सहमरणानुमरणे मलमासादा वपि कार्य्ये निरवकाशनिमित्तकत्वात् निमित्त कानीति वचना दिति।प्रसङ्गाद्विधवा स्त्रीधर्म्माः तत्र विष्णुः ब्रह्मचर्य्यं मैथुन तांबूलचूडादिवर्जनं विधवाकर्त्तव्यमिति शेषः। तथा ताम्बूलाभ्यं जनंचैवकांस्यपात्रेचभोजनंयतिश्चब्रह्मचारीचविधवापरिवर्जयेत्। स्मृतिः एकाहारः सदाकार्य्योनद्वितीयः कदाचन पर्य्यंकशा यिनीनारीविधवापातयेत्पतिम् तर्पणंप्रत्यहङ्कार्य्यंभर्तुस्तिल कुशोदकैः स्नानंदानंतीर्थयात्रांविष्णोर्नामग्रहंतथा इति ॥

मरणानन्तररोदनादिनिषेधमाह कात्यायनः श्लेष्माश्रु- वान्धवैर्मुक्तं प्रेतोभुंक्तेयतोऽवशः अतोनरोदितव्यंतुक्रियाका- र्य्याप्रयत्नतःरामायणे शोचमानास्तुसस्नेहावान्धवास्सुहृदस्त था पातयन्तिगतंस्वर्गं अश्रुपातेनराघव इति ॥

दिवसेशवस्पर्शे दाहकरणे रात्रौ ग्रामप्रवेशः रात्रौ शव- स्पर्शादिकरणे सूर्य्योदयानन्तरं तथाहिपारस्करः प्रेतस्पर्शिनो न ग्रामं प्रविशेयुरा नक्षत्राद्रात्रौ चेदादित्यस्यप्रेतस्पर्शिन इति अजहत्स्वार्थलक्षण यादाहकर्तुरप्युपलक्षकम् ॥

पिण्डदानं न रात्रौ न वा भोजनानन्तरं दिवसेपि रात्रौ मरणे जाते ज्ञाते वा निषिद्धकाले रात्रौ पिण्डा न देया इति स्मृतिसारलिखनात् भोजनजन्याशौचम्भवत्येवेतिरुद्रधरलिख नाच्च श्राद्धाधिकारिभिन्नेन दाहे कृतेपि तदधिकारिणादशपि- ण्डा देया एवेतिसम्प्रदायः । अधिकारिभिन्नेन दाहकर्त्रापि स्वीययावदशौचे दशपिण्डादेयाः असगोत्रः सगोत्रोवायदिस्त्री यदि वा पुमान् प्रथमेहनियोदद्यात्सदशाहंसमापयेत् इत्याश्व

लायनात् दाहानन्तर श्राद्धाधिकारिण्यायातेश्रवणदिनेऽतीत पिण्डंदत्वाऽवशिष्टपिण्डानशौचान्तिमदिनंयावत्प्रतिदि न न्द-द्यादितिमुख्यपक्षःयावदशौ चंप्रेतस्योदकंपिण्डमेकंचदद्यु रिति विष्णुवचनात् अशौचान्तिमदिन एव सर्वंपिण्डदानमिति गौणः तत्र मुख्यपक्षःसांप्रदायिकव्यवहारसिद्धः द्वितीयस्तु क्वचित्काःसर्ववर्णैर्नवमदिने नवमं पिण्डं दत्वाऽशौचान्तिम-दिनएव दशमपिण्डो देयः दिवसेदिवसेदेयः पिण्डएवंक्रमेणतु इत्युपक्रम्य देयस्तुदशमः पिण्डोराज्ञांवैद्वादशेहनि । वैश्यानां पञ्चदशमेदेयस्तुदशमस्तथा । शूद्रस्तुदशमःपिण्डोमासेपूर्णेऽन्हिदीयते इति ब्रह्मपुराणात् । विगोत्रेण श्राद्धाधिकारिणास पिण्डनेकृतेपि दाहकर्त्रा सगोत्रेण प्रे तपदेनैवयावदशौचंपि-ण्डादेयाः ॥

पूरकपिण्डदानस्यप्रे तोद्देश्यकत्वनियमात् । शुनःपुछः फल मूलैश्चपयसापायसेनगुडेनच । शालिनाशक्तु भिर्वापिशाकैरप्य थनिर्वपेदिति पिण्डानितिशेषः । इयांस्तुविशेषः । येनद्रव्ये-णप्रथमदिनेपिण्डदानं तेनैवसर्वस्मिन्दिने प्रथमेहनियद्द्रव्यं तदेवस्याद्दशाहिकमिति शुनःपुछवचनात् अन्नोदकक्रिया तु पिप्पलपत्रपुटकेनैवकर्त्तव्याआनयेंगुदपिण्डाकपत्रंबोधिद्रुमस्य च मन्दाकिनींपुरस्कृत्यकरिष्येउदकक्रिया इति रामायणात् । इङ्गुदः फलविशेषः इङ्गुदीतापसतरुरित्यमरः तपस्विजनोप युक्तफलवल्कलयु तत्वेन तापसतरुत्वमिति रायमुकुटः । जी-यापूताइतिख्यातइति रायमुकुटादयः पिण्याकः पिडारइति-प्रसिद्धः एतत्फलद्वयंपिण्डार्थकं बोधिद्रुमश्चलदलः पिप्पलः

कुंजराशन इत्यमरः अथत्र्यहाशौचादौ पिण्डदानक्रममाह पारस्करः प्रथमेदिवसेदेयास्त्रयः पिण्डाःसमाहितैः द्वितीयेच-रोदद्यादस्थिसंचयनंतथात्रींस्तुदद्यात् तृतीयेन्हिवस्त्रादिक्षालनं तथाऽस्पृश्यश्रृङ्गः सद्यश्शौचेप्रदातव्याः सर्वेपियुगपत्तथा युगपदेकदा । अधिकारिणा सद्यश्शौचप्रयोजकमरणवार्त्तानु दिते- सूर्य्येएवदातव्या सूर्य्योदयानन्तरं स्नात्वादश पिण्डान्दत्वा आद्यश्राद्धं कृत्वानखलोमछेदनंकुर्य्यादिति समाचाराः ॥ अ-स्थिसंचयकालमाह अस्थिसंचयमित्युपक्रम्य ब्रह्मपुराणे चतुर्थे ब्राह्मणानान्तुपञ्चमेहनिभूभुजाम् सप्तमे वैश्यजातीनांशूद्राणां दशमेहनि । कर्तव्यन्तुनरैःश्राद्धंदेशकालाविरोधतः । तथा च देशकालानुसारेणास्थिसंचयः कार्य्यइत्यर्थ इतिसंपूर्णाशौचेऽस्थिसंचयस्यमुख्यकालाः । अल्पाशौचेआहछन्दोगपरिशिष्टे अह्वाशौचेद्वितीयेह्निकर्त्तव्यस्त्वस्थिसंचयः । सद्यश्शौचे तत्क्षणन्तु कर्त्तव्यइतिनिश्चयः अहाशौचेतृतीयेह्नि इतिगौणः अ-स्थिसंरक्षणाशक्तौतुगौणकालमाहरत्नाकरेसंवर्त्तः प्रथमेह्नितृतीयेवासप्तमेनव मेथवा अस्थिसंचयनंकार्य्यं निजैस्तद्गोत्रजैर्म्मृतेइति श्राद्धयोग्यस्यबालादेर्द्दशेऽशौचान्तिमदिनएवास्थि-संचयस्तदुत्तरदिनेब्राह्मणभोजनमिति संप्रदायसिद्धव्यवहारः॥

गङ्गास्थिप्रक्षेपेफलमाह यमः गङ्गातोयेषु यस्यास्थिप्लवते शुभकर्म्मणः । नतस्यपुनरा वृत्तिर्ब्रह्मलोकात्कदाचन । दशाहाभ्यन्तरेयस्यगङ्गातोयेस्थिमज्जति । गङ्गायांमरणेयादृक्तादृक्-फलमवाप्नुयात् ब्रह्मपुराणे अस्थीनिमातापितृपूर्वजानांनयन्ति गङ्गामपियेमनुष्याः । सद्भक्तिकारापिदयाभिभूतास्तेषान्त ती-

र्थानिफलप्रदानि। मातुःकुलंपितृकुलंवर्जयित्वानराधमः। अस्थीन्यन्यकुलोत्थानिनीत्वाचान्द्रायणंचरेत्। अत्रमात्रादिवंशद्वयंविहायान्यवंशानांदृष्टप्रयोजनार्थितयास्थिनयनेदोषइति वाचस्पतिमिश्राः। दृष्टप्रयोजनंद्रव्यलाभादिएतेनपुण्यरूपादृष्टप्रयोजनार्थितयापित्रादिवंशद्वयातिरिक्तस्यापिसमानजातीयस्यास्थिनयनेनदोषइतिपर्य्यवसितं। अस्थिप्रक्षेपेविधानमाहश्राद्धविवेके स्नात्वाऽस्थीनिपञ्चगव्येनसंप्रोक्ष्यहिरण्यमध्वाज्यतिलैः संयोज्य मृतपिण्डके निधाय दक्षिणां दिशं पश्यन् ओं नमोधर्मायेति वदन् जलं प्रविश्य प्रेतगतस्वर्गकामो दक्षिणाभिमुख समेप्रीयतामित्युक्त्वा गङ्गायांनिःक्षिपेत् दक्षिणां दद्यात् तीर्थचिन्तामणौ एवंकृतेप्रेतपुरेस्थितस्यस्वर्गेगतिस्स्यात्तुमहेन्द्रतुल्या इति आश्वलायनः नैवास्यांरात्रावन्नंपचेयुस्त्रिरात्रमक्षारलवणाशिनश्चस्युर्द्वादशरात्रंमहागुरुष्विति महागुरवोमाता पिताआचार्य्याः तथा चाशौचिनामशौ चाधिकरणरात्रौ पाकनिषेधः अशौचभागिनां त्रिरात्रं क्षारलवणनिषेधः महागुरुषुमृतेषु द्वादशरात्रमक्षारलवणभक्षणनिषेधः तेनसैन्धवलवणभक्षणे न दोषः इति तात्पर्य्यम् ॥

अग्निहोतॄणां दाहदिनमारभ्यतद्भिन्नानांचमरणदिनमारभ्याशौचंउत्पद्यते तथाहिमरणादेव कर्त्तव्यः संयोगोयस्यनाग्निनादाहादूर्ध्वमशौचं स्याद्यस्यवैतानिकोविधिरिति शङ्खवचनात् यातेप्यशौचेऽज्ञातेनश्राद्धादिकर्म्मप्रतिरोधः किन्तु ज्ञाते एवाशौचेतत्प्रतिरोधः तथाहि ब्रह्मपुराणे अपिदातृगृहीत्रोश्चसूतकेमृतकेतथा अविज्ञातेनदोषः स्याच्छ्राद्धादिषकथं-

चन वित्राप्तेभोक्तुरेवस्यात्प्रायश्चित्तं क्रमादिति विज्ञानं विशेषतोज्ञाम् निश्चयात्मकमिति यावत् तथा चनिश्चयात्मकज्ञान विषयेऽशौचेकर्म्मप्रतिरोधइति पर्य्यवसितम्अशौचेत्याज्यानाह याबालः सन्ध्यापंचमहायज्ञान्नैत्यकंस्मृतिकर्म्मच तन्मध्येहापयेत्ते षांदशाहान्तेपुनःक्रिया तन्मध्ये स्वस्वाशौचमध्ये हापयेत्त्यजेत् दशाहान्तपदं स्वस्वाशौचान्तद्वितीयदिनोपलक्षकम् पुनःपुनः क्रियेति कर्तव्येति शेषः॥

पञ्चमहायज्ञानाह छन्दोगपरिशिष्टे पञ्चैव महायज्ञा भूत यज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज इति, अध्यापनं ब्रह्मयज्ञःपितृयज्ञस्तुतर्पणम् होमोदैवोवलिर्भौतोनृयज्ञोतिथि पूजनम् श्राद्धंवापितृयज्ञस्स्या त्पित्रोर्वलिरथापिवा॥

सङ्कल्पितव्रतमशौचेपिकर्तव्यं तथा च विष्णुः नव्रतिनां व्रतेइति व्रतिनां आरब्धव्रतानांनव्रते इति अशौचंप्रतिरोधकमिति शेषः तिथितत्वे विष्णुः व्रतयज्ञविवाहेषुश्राद्धेहोमार्चनेजपे आरब्धे सूतकंनस्यादनारब्धेतुसूतकम् आरंभोवरणं यज्ञे सङ्कल्पोव्रतजापयोः नान्दिश्राद्धंविवाहादौश्राद्धेपाकपरिक्रिया निमन्त्रणंतु वाश्राद्धेप्रारम्भःस्यादितिस्मृतिः सूतकपदमशौचमात्रोपलक्षकं नान्दोश्राद्धमाभ्युदयिकं विवाहादावित्यादिपदादुपनयनादिपरिग्रहः अपवादमाह यमः दैवेभयेसमुत्पन्ने-प्रधानाङ्गविनाशिते पूर्वसङ्कल्पितेचार्थेतस्मिन्नाशौचमिष्यते ब्रह्मपुराणे गृहीतमधुपर्कस्ययजमानाच्चऋत्विजः पश्चादशौचेंपतितेनभवेदितिनिश्चयः अशौचप्रयुक्तकर्मप्रतिरोध इति शेषः मरीचिः लवणेमधुमांसेचपुष्पमूलफलेषुच शाककाष्ठतृणेष्वेवं-

दधिसर्पिःपयस्सुच्च तैलौषध्यजिनेच्चैवपक्कापक्वेस्वयंगृह्ने पण्ये-
षुच्चैवसर्वेषुनाशौचंमृतसूतके पयोत्र दुग्धम् ॥

पक्वंशक्तुमोदकादि अपक्कं तण्डुलादि तथा चलवणादी
नामुक्तानामशौच्चिनोपिग्रहणेनदोषःपक्कापक्कयोस्त्वशौच्चिसम्ब-
न्धिनोः स्वयं ग्रहणेनदोष अशौच्चिहस्तात् ग्रहणेतुदोषएवेतिभा
वःसम्पूर्णाशौचसङ्करमाह ब्रम्हपुराणे आद्यभागद्वयंयावत्सूतक
स्यतु सूतके द्वितीयेपतितेचाद्यात् सूतकाच्छुद्धिरिष्यते अत-
ऊर्ध्वंद्वितीयात्तुसूतकान्ताच्छुचिःस्मृतः विष्णुः रात्रिशेषेदिन-
द्वये न प्रभातेदिनत्रयेणेति अशौचान्तद्वितीयदिनेऽशौचपाते त
दशौचान्तेश्राद्धकर्त्तव्यस्वावगमकमनुपदंवक्ष्यतेएतेनसर्व व-
र्णानांसंपूर्णाशौचपूर्वार्द्धे सजातीयसमानदिनव्यापकंद्वितीया
शौचेपतिपूर्वाशौचेऽतीतेशुद्धिः उत्तरार्द्धेउपान्त्यदिनपर्य्यन्ते-
द्वितीयतादृशाशौच पातेउत्तराशौचेऽतीते शुद्धिः साजात्यन्तु
मरणाशौचत्वादिनातेनमरणाशौचेम रणाशौचस्यैवस जातीय-
त्वं जननाशौचेजननाशौचस्यै वेतिबोध्यम् अशौचान्तिमाहो-
रात्रेतादृशद्वितीयपाते अशौचान्तिमद्वितीयदिनं तदग्रिमदिन-
द्वयंचाशौचं अशौचान्तिमदिनप्रभातकालेतादृशद्वितीयाशौच-
पातेतत्प्रभातानन्तरदिनत्रयेणशुद्धिरितिपर्य्यवसितम् अरुणोद
यानन्तरं सूर्य्योदयंयावत्प्रभात इति रत्नाकरः ॥

अरुणोदयकालमाह स्कान्दे उदयात्प्राक्चतस्रस्तुनाडिका
अरुणोदयः नाडिका दण्डः अहाघल्पाशौचेसजातीयसमानदिन
व्यापका शौचान्तरनिपाते उत्तरांशौचव्यपगमेन शुद्धिः अघ
वृद्धाव शौचन्तु परेणतु समापयेत् इतियमवचनात् अत्रत्र्यहा

द्यसंपूर्णा शौचेसमानदिनव्यापकाशौचान्तरपातेग्रिमाशौचव्य पगमेन शुद्धिरिति शुद्धिविवेकः सजातीययोरल्पदिनाधिक दिनव्यापकयोरशौचयोः सङ्करेऽधिकदिनव्यापकाशौचान्तेन शुद्धिः जननमरणाशौचयोः सङ्करेऽल्पदिनव्यापकेनापि मरणाशौचेनातीते न शुद्धिः तदाह कूर्म्मपुराणे अघानां यौगपद्ये तुज्ञेयाशुद्धिर्ग्गरीयसा मरणोत्पत्तियोगेतुगरी योमरणम्भवेदिति ॥

पैठीनसिः सूतिकांपुत्रजननीं विंशतिरात्रेण स्नातांसर्वकर्म्माणि कारयेत् मासेन स्त्रीजननोमितिपुत्रीमज्जनतोऽर्थंसर्वं वर्णं जननीस्पर्शेदशाहात्छुचिःकर्म्मार्होद्विदशाहतः पुरुषसूर्म्मासात्परंस्त्रीप्रसूरितिच । पुत्रीपितामज्जनतः स्नायान् शुचिस्तत्कालकर्त्तव्यदानादिकर्म्मयोग्यः स्पर्शायोग्यश्चएतेन प्रसूतीनांकन्याजन्मनि मासंपुत्रजन्मनिविंशतिदिनम शौचं यत्स्व प्रसवनिमित्तकं तन्मरणाशौचेनवाध्यते तस्यास्तादृशप्रसवनिमित्तक जनना शौचमेववलीयः तेनप्रसूतीनांपतिमरणेऽपिविंशति दिनाद्यशौचान्तेन शुद्धिरिति पर्य्यवसितम् ॥

अशौचान्तद्वितीयदिनेऽशौचपातेतु तदशौचेव्यतीते शुद्धिः तद शौचांत द्वितीयदिनेआघशुद्धंच । एकादशाहोत्पन्नाशौचेनयद्याघश्राद्ध प्रतिरोधस्तदा तदशौचान्तेश्राद्धकरणे शय्यादानादिनभवतीति द्वैतनिर्णये वाचस्पतिमिश्रलिखनस्वरसात् देयेपितॄणांश्राद्धेवै अशौचंजायते यदि अशौचे तु व्यतीतेवै तेषां श्राद्धं प्रदीयते इति ऋष्यश्रृंगवचनेसामान्यत एवश्राद्धपदोपादानाच्च ॥ ब्राह्मणादिचतु र्वर्णानांसपिण्डाशौचमाह

मनुः शुद्धेद्विप्रोदशाहेनद्वादशाहेनभूमिपः वैश्यःप ञ्चदशाहेन शूद्रोमासेनशुध्यति चतुर्णामपिसकुल्येमृत्तेंजानमेवात्रिरात्रमेवा शौचंगोत्रजेस्नानपर्य्यन्तमेव त्रिरात्रेणसकुल्यास्तु स्नात्वाशुध्यन्ति गोत्रजाइति वृहस्पतिवचनात् सापिंड्यमाहतुः शंखलिखितौ सपिण्डतातुसर्वेषांगोत्रतः साप्तपौरुषीति मनुः सपिण्डतातु पुरुषेसप्तमेविनिवर्त्ततेइति अत्रगोत्रपदं सन्ततिः तेन वोजिनमारभ्यसप्तपुरुषमभिव्याप्यसर्वेषांसन्तानानांसन्तानिनांचपरस्परंसापिंड्यं एकस्यापिसप्ताधिकत्वेतेन समंसप्तान्तगतिस्यापि सापिंड्यन्निवर्त्तते संयोगवदुभयनिरूप्यत्वादितिद्वैतनिर्णये वाचस्पतिमिश्राद्वैतपरिशिष्टे केशवमिश्राश्च सप्तमेइति सप्तमेसति अनन्तरं अष्टमे सपिंडतानिवर्त्तातइत्यर्थः अत्रपरस्परसापिंड्य मिति एतेन पूर्वषट्केनोत्तरषट्केनचमध्यसापिंड्य मुक्तंभवति संयोगवदिति यद्यप्यत्र माना भावः, तथापि सर्वेषामितिपदात् परस्परप्रतियोगिता-लभ्यते इत्याशय इति जीर्णोद्धारेठक्कुरोपाह्वमधूसुदनाः हारीतः अष्टमनवमदशमास्सकुल्याइति ज्ञायमानजन्मनांदशमपुरूषाधिकानां मरणजन्मनोः पक्षिणीतिशुद्धिविवेके दश पुरूषानन्तरं जन्मनाम्नोरविज्ञानेऽस्मत्कुलजाइत्येवमाकारकज्ञान-गोचरागो त्रजाइत्यपितत्रैव स्मृत्यर्थनिर्णये केनचित्क्षत्रियेणदशाहाशौचमभ्युपेतम् सर्वेवास्युर्दशाहिन इति वचनात् तदा तेषांब्राह्मणवदेवाशौचं जननमरणयोरनुसन्धेयम् ये तु षट् त्रियपदाभिधानेन क्षत्रियत्वाभिधायिनो वैश्याः पारम्पर्य्येण द्वादशाहाशौचमभ्युपगच्छन्ति येतुराजपुत्रपदेभिधानेन पारं

पर्य्यॆण द्वादशाहाशौच मङ्गीकुर्वन्ति येचदेशविशेष नियत तया द्वादशाहाशौचमेवशूद्रामन्यन्ते तेषां क्षत्रियजात्युक्ताशौचमेवसुधीभिरुपदेष्टव्यम्पारम्पर्य्यसिद्धितया तस्या पिशाच्चार्थत्वादिति गोकुलनाथोपाध्यायचरणाः तथाचाशौचसङ्करादिकमपि तादृशतादृशस्थले ब्राह्मणादि रीत्यैव तादृशक्षत्रियानामपि अवगन्तव्य इति भावः ॥

अथ कन्यामरणाद्यशौचम् तत्रयद्यपिकन्यावालकयोः सपिण्डत्वसत्वात् प्रागुक्तमनुवचनेन तयोरपिदशाहाद्यशौचमेवप्राप्यते तथापिसामान्य शास्त्रतो नूने विशेषोवलवान् भवेदित्यनेनविशेषवचनेवलवत्वात्तयोरल्याशौचमेवविशेषवचनमाह ब्रह्मपुराणे आजन्मनस्तुचूडान्तंयत्रकन्याविपद्यपेसद्यः शौचोभवेत्तत्रसर्ववर्णे षुनित्यशः ततोवाग्दानपर्य्यन्तंयावदेकाहमेवहि अतःपरंप्रवृद्धानांत्रिरात्रमितिनिश्चयः वाग्दानेकृते तत्रजातश्चो भयतस्त्र्यहम्पितुर्वरस्यचततोदत्तानांभर्तु रेवहि स्वजात्युक्तशौचंस्यात्सूतके मृतकेतथा अयंभावार्थः जन्मतोद्वितोयवर्षपर्य्यन्तं कन्या मरणेसर्ववर्णानां सद्यःशौचम् द्वितोयवर्षादूर्ध्वन्तुभ्यमेषा कन्या दातव्या इतिवाक्प्रयोगपर्य्यन्तमेकाहोरात्रमशौचम् तादृश वाक्यप्रयोगदानान्तरं विवाहपर्य्यन्तं पितृकुले पतिकुले च त्रिरात्रम् यत्र वाग्दानंनास्ति तत्र द्वितीयवर्षानन्तरंविवाहपर्य्यन्तमेकाहोरात्रम् एतत् विषयकमेवअहःस्त्वदत्तकन्यास्विति याज्ञवल्क्यवचनम् ॥

दाहकर्तु स्तत्रापित्रिरात्राशौचमेव दहित्वाचवहित्वाचत्रिरात्रमशुचिर्भवेदितिवचनात् असंवन्धिद्विजान्दहि त्वावहित्वा

च सद्यःशौचम् सम्बन्धे सति त्रिरात्रमिति पैठीनसिवचनात् अत्रदहित्वावहित्वा इति तु आर्षत्वादेव तयोरनिट्त्वात् लोके दग्ध्वावोढ्वाइत्येव विवाहानन्तरं कन्यामरणे प्रसवे वामातापित्रोस्त्रिरात्रम् बन्धुवर्गाणां सद्यःतथाहि ब्रह्मपुराणे दत्तानारोपितुर्गेहेसू यतेम्रियतेथवा स्वमशौचंचरेत्सम्यक्पृथक्स्थानेऽव्यवस्थिता तद्बन्धुवर्गस्त्वेकेनशुध्येत्तज्जनकस्त्रिभिःअत्र दत्तानारीपृथक्स्थाने ऽव्यवस्थितापि प्रसूतामृतावातत्पतिसपिण्डाः स्वमशौचंचरेयुःदत्तानां भर्त्तुरेव हीत्येकवाक्यत्वात् इतिमध्यमखण्डार्थंइतिहैतपरिशिष्टं स्वातंत्र्यात्पति भिन्नंयमाश्रिता स्त्रीभवति तस्यत्रिरात्रमशौचं तथाहस्मृतिः पित्रादत्तातुयाकन्यास्वातन्त्र्यादन्यमाश्रिता यंयंश्रितवतीभूयस्तस्याशौचन्त्र्यहंत्र्यहम् मृतायांवाप्रसूतायांनान्येषामितिनिश्चयः कामादक्षतयोनिश्चेदन्यंगत्वाऽव्यवस्थिता तस्यान्यस्यसगोत्रासायन्त्वाश्रितवतीस्वयम् तस्या शौचमितियमा श्रितातस्यैवाशौचं त्र्यहमित्यर्थः । नान्येषामिति ततुसापिण्डाना न्नाशौचमित्यर्थः ॥

अथ गर्भश्रावाशौचमाह ब्रह्मपुराणे षण्मासाभ्यन्तरंयावद्गर्भश्रावोभवेद्यदि तदामाससमैस्तासांदिवसैः शुद्धिरिष्यते अत ऊर्ध्वं स्वजात्युक्तमशौचं तासु विद्यते सद्यःशौचंसपिण्डानांगर्भस्यपतनेसति षण्मासाभ्यन्तरे तृतीयमासयोपरोति शेषःमासत्रयाभ्यन्तरे सर्वासामधिकाशौचस्य वक्ष्यमाणत्वात्तेन मासत्रयोपरिषण्मासंयावत् व्यतीतमाससमसङ्ख्यादिनान्यशौचं सर्ववर्णसाधारणम् तासां स्त्रीणाम्तासुस्त्रीषुमासत्रयाभ्यन्तरेआहमरीचिः गर्भश्रुत्यांयथामासमचिरेतूत्तमेत्र्यहम् राजन्येतु-

चतूरात्रंवैश्येपञ्चाहमेवच अष्टाहेनतुशूद्रायाःशुद्धिरेषाप्रकीर्त्तिताअचिरे मासत्रयाभ्यन्तरे उत्तमे उत्तमजातियेव्राम्हण्यामित्यर्थः पुंस्त्वमत्राविवक्षितं अन्यथासद्यश्शौचसपिण्डनामिति प्रागुक्तब्रह्मपुराणविरोधः स्यात् तथाच ब्राह्मण्यादीनांप्रसुतीनांप्रागुक्तमशौचंतत्पतिपुत्रादीनां तु सपिण्डानांस्नानलोमनखवापनपर्य्यन्तमेव गर्भस्रावेऽशौचमिति भावः द्विवर्षाभ्यन्तरे वालस्य कन्यायाश्चभूमिखननं न तु दाहः तदूर्ध्वंतु दाह एव सर्व वर्णानां तथाहि ऊनद्विवार्षिकंवालंभूमावेवनिधापयेत् नद्विवर्षस्यकर्त्तव्याबान्धवैरुदकक्रियेति प्रमादादिनादाहेकृते-विशेषमाह तद्दाहमभिधाय ब्रम्हपुराणे अनतीत्यद्विवर्षस्तु प्रेतोयत्रापिदह्यतेअतिमोहाभिभूतैश्चदेशसाधर्म्यमादरात् अशौचंब्राम्हणानान्तु त्रिरात्रन्तत्रविद्यतेराज्ञामेकादशाहन्तुवैश्यानां द्वादशान्हिकम् अपिविंशतिरात्रंतुशूद्राणांभवतिक्रमात् तत्रेति द्विवर्षवयस्कस्या दाहे इत्यर्थः ॥

अथ बालकमरणाशौचमाह याज्ञवल्क्यः आदन्तजननात्सद्यः आचूडान्नैशिकीस्मृता त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् आदन्तजननात्दन्तजननकालपर्य्यन्तं सकालः सप्तमो मासः दन्तजन्मसप्तमे मासिइत्युपनिषदः सरोजकलिकायां मर्य्यादायामत्राङ तेनसप्तममासात्प्राक्षण्मासपर्य्यन्तं वालमरणेसद्यश्शौचं चतुर्वर्णस्य अतःपरंब्राह्मणमात्रविषयकमिति सप्तममासात्प्राक्सद्यशौचमिति शुद्धिविवेकः आचूडान् चूडाकरणकालपर्य्यन्तं सचतृतीयवर्षः तृतीयेवाप्रतिहतइतिवचनात् आव्रतादेशात् उपनयनकालपर्य्यन्तं स च तृतीयवर्षः तृतीये

थाप्रतिहतइतिवचनात् आव्रतदेशात् उपनयनकालपर्य्यन्तं सचषड्वर्षान्तः तथाहिब्रह्मपूराणे द्विजन्मनामयंकालस्त्रयाणान्तु षडाब्दिक इति। एवमग्रे पि व्रतमुपनयनकालः स च षडवर्षान्तः अङ्गिराः विप्रे न्यूनेत्रिभिर्वर्षैर्मृ तेशुद्धिस्तुनैशिकी द्व्यहेनक्षत्रियेशुद्धिस्त्रिभिर्वैश्येमृतेसति निवृत्तचूडकेविप्रे त्रिरात्राच्छुद्धिरिष्यते निवृत्तेक्षत्रियेषड्भिर्वैश्येनवभिरेवच अनुपनीतोविप्रस्त्वित्यादि ब्रह्मपूराणवचनेक्षत्रियवैश्ययोः षडब्दाभ्यन्त रेत्रिरात्राभिधानं वेदाग्निमतोरेव अन्येषां षडहनवाहौ पूर्वोक्तावेवेति शुद्धिविवेकेस्पष्टम् शूद्रे त्रिभिर्वर्षान्न्यूनेमृतेशुद्धिस्तुपञ्चभिः अतऊर्ध्वंमृतेशूद्रे द्वादशा होविधीयते शङ्खः अनूढभार्य्यंशूद्रस्तू षोडशाद्वत्सरात्परम् मृत्युंसमधिगच्छन्तिमासंतस्यापिवान्धवाः शुद्धिंसमधिगच्छन्तिनात्रकार्याविचारणा अनूढभार्य्यः नविवाहिताभार्य्यायेन सअविवाहित इति यावत् विवाहिते शूद्रे मृते आह। अङ्गिराः षड्वर्षान्तमतीतस्तु शुद्रः संम्रियतेयदि मासिकंतु भवेच्छौचमित्याङ्गिरसभाषितम् अत्र षड्वर्षान्तमतीत इत्यत्रषड्वर्षोऽन्ते यस्य इति व्युत्पत्त्यापंचवर्षं अतीतः प्राप्य इत्यर्थः पंचवर्षादधोविवाहः स्त्रियाः शुद्रस्य वा न प्रशस्तः यत्र तयोस्तृतीये चतुर्थेवाविवाहो जातस्तत्र तयोर्मरणे सम्पूर्णाशौचं शास्त्रान्नसिध्यति देशाचारादेव तत्र व्यवस्थावोध्या यस्मिन्देशेयदाचारःपारंपर्य्यक्रमागतः श्रुतिस्मृत्यविरोधेनसदाचारःसउच्यते इति देशकुलाचारस्य व्यवस्थापकत्वादिति स्मृत्यर्थनिर्णये गोकुलनाथोपाध्याः एतावदग्रन्थपर्य्यालोचनया अयमर्थः पर्य्यवसितः ब्राम्हणवालेसप्तमासा

त्प्राक्मृतेब्राम्हणानां सद्यश्शौचम् षड्वर्षानन्तरं त्रयाणां ब्राम्हणादीनां सम्पूर्णाशौचम् तदूर्ध्वं बाले मृते जन्मावधिद्विवर्षमाससमाप्तितं या वदेकाहोरात्रम् उभयत्रभूमिनिखिननंश्शश्त्रादिछेदनं चतदूर्ध्वंषड्वर्षपर्य्यन्तं त्रिरात्रम् तत्र दाहं कृत्वा पिण्डदानं द्वितीयदिनेऽस्थिसंचयः तदसम्भवे तृतीयदिनेपिण्डदानमस्थिसंचयनं नखकेशछेदनं च चतुर्थदिने ब्राह्मणभोजनमिति सांप्रदायिकव्यहारः क्षत्रियाणां सप्तममासपर्य्यन्तं सद्यः तदनन्तरं द्विवर्षपर्य्यन्तं द्व्यहम् तदूर्ध्वं षड्वर्षपर्य्यन्तं षडहिनमशौचंवैश्यानां सप्तमासपर्य्यन्तं सद्यः तदनन्तरं द्विवर्षपर्यन्तं त्र्यहम् तदूर्ध्वं षड्वर्षपर्य्यन्तं नवरात्रं षड्वर्षानन्तरं ब्राह्मणक्षत्रियविशां संपूर्णाशौचं एकादशाहादिक्रियाश्च शूद्राणां सप्तममासपर्य्यन्त सद्यः तदनन्तरं द्विवर्षपर्य्यन्तं पंचाहम् भूमिनिखननंच तदूर्ध्वं षोडशवर्षपर्य्यन्तं अविवाहितेमृते द्वादशदिनम् षोडशवर्षानन्तरं मासमशौचम् श्राद्धादिक्रियाश्च विवाहिते तु पंचवर्षानन्तरं षडवर्षान्तमतोतइति प्रागुक्तांगिरोवचनात् पंचवर्षाभ्यन्तरे च देशकुलाचारान्मासमशौचं श्राद्धादिक्रियाश्च ॥

भिन्नगोत्रे कृत्रिमादौ अशौचमाह दत्तककृत्रिमादि पुत्रानभिधाय ब्रह्मपुराणे भिन्नगोत्राःपृथक्पिण्डाःपृथक्गोत्रकरास्तथा सूतकेमृतकेचैवत्र्यहाशौचस्यभागिनः ॥

औरसभिन्नपुत्रेषु मृतैष्वशोचमाह शुद्धेदित्यनुवृत्तौ विष्णुः आचार्यमातामहे अतीतेत्रिरात्रेणअनौरसेषु पुत्रेषुजातेषुचमृतेषुच परपूर्वासुभार्य्यासुप्रसूतासुमृतासुच एतच्च सर्ववर्णविषयम् ॥ विशेषानभिधानात् ॥

मनुः गुरोः प्रेतस्यशिष्यस्तु पितृमेधं समाचरन् प्रेतहा-रैस्समंतत्रदशरात्रेणशुध्यति अस्यार्थः शुद्धिविवेकेतथाहि। यश्शिष्यो वेदाध्येतागुरुकुले तिष्ठन् गुरोः संस्कारं करोति सदश रात्रेण शुध्यति यः शिष्यः संस्कारं न करोति तस्य त्रिरात्रम् तत्र मनुः त्रिरात्रमाहुराशौचंमाचार्य्येसंस्थितेसति संस्थितेमृते॥

गुरुलक्षणमाह अल्पम्वाबहुवायस्यश्रुतस्योपकरोतियः तम-पीहगुरुम्विद्यादिति बौधायनः त्रिरात्रमहोरात्रमेकरात्रमितिकु-र्वंति आचार्य्योपाध्यायतत्पुत्रेष्विति अत्र मृतेष्विति शेषः॥

मातामहे मृते त्रिरात्रमाह वृहस्पतिः त्र्यहम्मातामहाचार्य्य श्रोत्रियेषुशुचिर्नरः मातुलेपक्षिणीरात्रिः शिष्यर्त्विग्वांधवेषुच पक्षिणीतुदिनद्वयसहितारात्रिःरात्रिद्वयसहितंदिनं वा गौतमः असपिण्डे योनिसंवन्धे सहाध्यायिनिच मृत इति शेषः योनि सम्बन्धाश्चमातृष्वसृपितृष्वसृमातुलमातुलानिमातुलपुत्रमातृ ष्वस्त्रेयपितृष्वस्रेय दौहित्रभगिनी भागिनेयाः श्वश्रूश्वशुरौ चेति स्वगृहेमृतेमातुलेश्वशुरेगुरौस्वगृहमृतायां मतृष्वसरिश्व-श्र्वां च त्रिरात्रमिति शुद्धिविवेकः। अत्रयोनिसंवन्धाश्च मातु लमातृष्वस्त्रेयपितृष्वस्त्रेय इति मिताक्षरा तत्रैव यमइ-त्यनुवर्त्यमातुलेश्वशुरेमित्रे गुरौगुर्वङ्गनासुच अशौचम्पक्षिणी रात्रिर्मृतामातामहीयदि तथासंस्थिते पक्षिणी रात्रिर्दौहित्रे भगिनीसुतेमृते॥

अथ स्वगृहे कस्मिंश्चिन्मृते गृहस्थस्याशौचमाहाङ्गिराः गृहे यस्य मृतः कश्चिदसपिण्डःकथञ्चन तस्याप्यशौचम्विज्ञे यंत्रिरात्रमितिनिश्चयः॥

गौतमः मत्स्यमांसादि न भक्षे सुराप्रदानात् प्रदानं आद्यश्राद्धम् तेन मांसादिभक्षणनिषेधः सर्वसाधारण इति शूद्धिनिर्णयः आप्रदानाच्छ्राद्धे मांसप्रदानादित्यर्थः इति रत्नाकरः अशौचप्रकणे मनुः मांसासनञ्चनाश्नीयुःशरीरश्चपृथक्क्षितौ आप्रदानादिति स्वरसात् मृतकाशौचे एवमांसादि भक्षणनिषेधो न तू जननाशौ चेमार्कण्डेयपुराणे तैलाभ्यङ्गोवान्धवानामङ्गसम्वाहनञ्चयत् तेनवाप्यायतेजन्तुर्यच्चाश्नन्तिसुवान्धवाः अयञ्चाभ्यङ्गोऽस्थिसंचयनानन्तरमिति वाचस्पतिमिश्राः ॥

अथ अशौचान्तिमदिनकर्त्तव्यमाह बृहस्पतिः नवमेवाससांत्यागोनखलोम्नान्तदन्तिके नवम इति अशौचोपान्त्यदिनोपलक्षकम् ब्रह्मपुराणे यस्ययस्यतुवर्णस्ययद्यस्यातपश्चिमन्त्वहः सतत्रवस्तुशुद्धिंचगृहशुद्धिङ्करोत्यपि समाप्यदशमम्पिण्डंयथाशास्त्रमुदाहृतम्ग्रामाद्बहिस्ततो गत्वाप्रेतस्पृष्टेच्चवाससीअन्त्यानामाश्रितानांचत्यक्त्वास्नानङ्करोतिच श्मश्रुकेशनखानांचयत्याज्यन्तज्जहात्यपि पश्चिमं अशौचान्तिम् वस्त्रसिद्धिः वस्त्रप्रक्षालनम् गृहशुद्धिरुपलेपनादिः पिण्डदानानन्तरश्राद्धकर्तुर्नखकेशच्छेदनं समाप्य दशमम्पिण्डमित्यादिस्वरसात्साम्प्रदायिकव्यवहाराच्च त्याज्यं जहात्यनेनात्याज्यानाङ्कक्षादिकेशानां शिखानांचन त्याग इत्यवगम्यते अतएव वशिष्ठः स्मश्रुकेशनखान्वापदक्षिलोमशिखावर्जनमिति वपनंकेषामित्याहापस्तम्वः एषुघोदकदानन्तावन्तङ्कालमनुभाविना च परिवापनम् अनुभवन्तीत्यनुभाविनः अनुभवशालिन इति यावत् अनुभवस्तु सपिण्डादिमरणस्य तेन सपिण्डादिमरणानुभवशालिनां

सर्वैषामेव वापनमिति पर्यवसितम् यत्तु अनुपश्चाद्धावि इत्यनुभाविनःकनिष्ठाः तेन प्रेतकनिष्ठानामेव वपनमितिवाचस्पतिमिश्रैर्व्याख्यातम् तच्च व्यवहारविरोधात्त्याज्यमेव व्यवहारविरोधानुरोधेन रत्नाकरलिखितमप्युपेक्ष्ययत्रव्यवहारविरोधो नपतित तत्र यथा रत्नाकरमेवव्यवस्था इत्यनेन शुद्धिविवेक कर्त्रांव्यवहारवलवत्त्वस्योक्तत्वात् ॥

मनुः विगतन्तु विदेशस्थंश्रृणुयाद्योह्यनिर्द्दशम् यच्छेषन्दशरात्रस्यतावदेवाशुचिर्भवेत् अतिक्रान्तेदशाहेतुत्रिरात्रमशुचिर्भवेत् सम्वत्सरेव्यतीतेतुस्पृष्ट्वैवापोविशुध्यति गौतमः श्रुत्वाचोर्ध्वंदशम्याः पक्षिणीतिदेवलः ऊर्ध्वंसम्वत्सराद्यात्तुश्रूयतेचेन्मृतःस्वकैः भवेदेकाहमेकालतच्चसन्यासिनांविना अयमत्रभावः अशौचाभ्यन्तरे मरणश्रवणेऽवशिष्टोऽशौचदिनं यावदशुद्धिः अशौचान्तिमदिनानन्तरं षण्मासाभ्यन्तरंमरणश्रवणे त्रिरात्रम् षण्मासानन्तरं नवममासपर्यन्तं पक्षिणीतदनन्तरं वर्षं यावदेकाहोरात्रं वर्षानन्तरं स्नानोदकदानपर्यन्तमशुद्धिः इतिसर्ववर्णानां सम्पूर्णाशौचविषयम् असम्पूर्णत्र्यहाद्यशौचे तु अशौचाभ्यन्तरे मरणश्रवणेऽवशिष्टाशौचकालेन तादृशाशौचकाले व्यतीते तु स्नानोदकदानमात्रेण शुद्धिः ॥

तथाहि याज्ञवल्क्यः प्रोषितेकालशेषःस्यात्पूर्णेदत्त्वोदकंशुचिरिति त्रिरात्रादावशौचकाले व्यतीतेऽशौचाभाव एवइति रुद्रधरः जननाशौचाभ्यन्तरे जननश्रवणेऽवशिष्टाशौचकालेव्यतीतेशुद्धिः तदशौचानन्तरेजननश्रवणे ऽशौचाभावः नाशौचंप्रसवस्यास्तिव्यतीतेषुदिनेष्वपीति देवलात् षट्त्रिंशन्मतेऽपि

जनानन्तरदेशो देशान्तरं षष्टियोजनाभ्यन्तरेपि भाषाभेदगि-
रिमहानदी एतावत्समुदाय व्यवहितदेशोदेशान्तरएवतादृश
देशान्तरयोर्म्मृतेसपिण्डा नामपि सद्यश्शौचमेव तदाह पैठी
नसिः देशान्तरमृतस्य सद्यःशौचसपिण्डस्यापीति शेषः अत्ररु
द्रधरोपाध्यायाः गिर्य्यादिव्यवधानाभावेपि शास्त्रीय षष्टियोज
नानन्तरे प्रयागे मृतस्यतीरभुक्तिस्थितं प्रतिदेशान्तरमृतत्व-
व्यवहारः प्रामाणिकास्तु त्रिंशद्योजनानन्तरेंकाश्यां मृतस्य
गिर्य्यादिसमुदायव्यवधानाभावात् तीरभुक्तिदेशस्थितिं प्रति
न देशान्तरमृतत्वव्यवहार इति प्राहुः एतच्च दिक् प्रदर्शितम्
तेन यत्रैतादृशानन्तर्य्यं एतादृशसमुदायाव्यवधानतत्रदेशे
देशान्तरत्वमिति पर्य्यवसितम् ॥

मृतस्यत्रिविधाक्रिया पूर्वामध्यमाउत्तराचेति तत्रदाहमार
भ्याशौचान्तिमदिन पर्य्यन्त कर्त्तव्यक्रियापूर्वा एकादशाहस
पिण्डनान्तक्रिया मध्यमा तदुत्तरैकोद्दिष्टादिरूपोत्तरा तत्रपितृ
मातृसपिण्डोदयः पूर्वांक्रियांकुर्य्युः मध्यमायामनियमः उत्त
रांचनकुर्य्युः पुत्रपत्नीसोदरभ्रातापिताभ्रातृपुत्रः एतेचोत्तरक्रि
यायामप्यधिकारिणः पितृमातृसपिंडैस्तुसमानासलिलैस्तथा ।
तत्संघातान्तर्गतैर्वापिराज्ञात्राधनहारिणा । पूर्वाः क्रियास्तुक-
र्त्तव्याः पुत्राद्यै रेवचोत्तरा इति विष्णुपुराणात् अथाधिकारि-
पौर्वापर्य्यक्रमः । तत्रप्रथमं औरसः तदभावेपुत्रिकापुत्रः तयो
रभावे क्षेत्रजादिदशपुत्रामनूक्त क्रमेणाधिका रिणस्तथाहिम-
नुः औरसः क्षेत्रजश्चैवपुत्रिकापुत्रएवच्च कानीनश्चसहोढश्चगू-
ढोत्पन्नस्तथैवच्च पौनर्भवोपविद्धश्चदत्तः क्रीतः कृतस्तथा स्वयं

चोपगतः पुत्राद्द्वादशैतेप्रकीर्त्तिताः ॥ औरसेष्वपिबहुषुसत्सु सर्वपुत्रानुमतो ज्येष्ठ एव श्राद्धाधिकारी तदाह मरीचिः मृते पितरिपुत्रे णक्रियाकार्य्याप्रयत्नतः बहवस्स्युर्यदापुत्राः पितुरे कत्रवासिनः सर्वेषान्तुमतंकृत्वाज्येष्ठेनैकेनयत्कृतम् द्रव्येणचा पिभक्तेनसर्वैरेवकृतंभवेत् अत्र सर्वेषामेवानुमतिद्रव्यार्पणद्वारा श्राद्धनिष्पादने प्रत्यवायपरिहारादितिफलसिद्धिःसत्यप्यधि-कारेनपृथगनुष्ठानंवचनादित्यर्थः एवं च यत्र देशान्तरादौ अ-नुमतिद्रव्यश्लेषयोरभावस्तत्रपृथगेव श्राद्धम् अन्यथा प्रत्यवा यपरिहारो न स्यादितिशुद्धिविवेकः यत्तु पृथक् नैव सुताः कुर्य्युः पृथग्द्रव्या अपिकचित् इति लघुहारीतवचनं तत्सर्वे षामनुमतौ द्रव्यसंश्लेषे च पृथक्करणनिषेधकम् बृहस्पतिः अनेकधाकृताः पुत्राऋषिभिर्यैःपुरातनैः नशक्यतेऽधनाकर्त्तुं शक्तिहीनैरिदन्तनैः इदन्तनैः कलियुगस्थैः कलिधर्म्मप्रस्तावे पराशरः औरसःक्षेत्रजश्चैवदत्तःकृत्रिमिकःसुतः कर्तव्य इति शेषः अत्रक्षेत्रजपदमौरसविशेषणमिति पुत्रमीमांसायांनन्दः तथा च कलौ औरसदत्तककृत्रिमपुत्राः कर्तव्याः पुत्रिकापु-त्रोऽपि कर्तव्यः औरससमत्वात् औरससमत्वमाह याज्ञवल्क्यः तत्समःपुत्रिकापुत्रइति तत्पदमौरसपरम् एतच्चतुष्टयभिन्नाः पुत्रा न कर्तव्या द्विजैः कलौ शूद्रैस्तुपौनर्भवा अपि पुत्राः कर्तव्या अत एव शूद्रस्यत्वनूढभार्याजातस्य पुत्रस्य पितृश्राद्धे पौनर्भ वत्वादधिकारः इति अनूढशूद्राजातस्य पुत्रस्य जनकशूद्रश्रा-द्धादावतितरामधिकारः यत्र शूद्रविवाहिताभार्य्या तथा विधः पुत्रश्चतत्रापि स पुत्रएवाधिकारीति शुद्धिविवेककारालिखन्ति

स्म स पुत्र एवानूढभार्य्याजात पुत्र एव इत्यर्थः शूद्रस्यानूढ भार्य्याविहितैव अत एव शूद्रस्यद्वे भार्य्ये ऊढानूढे इति स्मृतिसारेऽभिहितम् पुत्रसामान्यभाव एवौरसभिन्नपुत्रकरणम् अपुत्रेणसुतःकार्य्योयादृक्तादृक्प्रयत्नतः पिण्डो दकक्रियाहेतोर्नामसङ्कीर्तनस्यचेतिवचनात् अपुत्रेण द्वादशविधपुत्ररहितेन इति रत्नाकरः नन्वेवं तर्हि विद्यमान एवयुधिष्ठिरे पाण्डु भीमसेनादीन् क्षेत्रजान् कथमकरोदितिचेत् तेदेव कल्पास्तेषामाचारोन करणीयोनवा निन्दनीयः कृतानियानिकर्म्माणि दैवतैर्मुनिभिस्तथा नाचरेत्तानिधर्मात्माश्रुत्वाचापिनकुत्सये दिति पुत्रमीमांसाधृतवचनात् कृत्रिमपुत्रानन्तरमौरस उत्पन्ने कनिष्ठोपि औरसएव ज्येष्ठः स एव श्राद्धाधिकारी ज्यैष्ठत्वात् औरसेपुनरुत्पन्नेज्यैष्ठ्यन्तेषान्निवर्तत इति वचनात् तेषांकृत्रिमादीनामित्यर्थः अत्र क्रोडपत्रम् अपुत्रेणसुतः कार्य्य इत्यस्य योग्यपुत्राभाववतासुतः कार्य्यं इति व्याख्याभिप्रायेण श्राद्धकरणायोग्येवालपुत्रादौ सत्वेपि कृत्रिमादयोभवन्ति इति रामेश्वरोपाध्यायः अपुत्रेणेति विद्यमानपुत्राभाववतेति व्याख्यामभिप्रेत्यपुत्रगर्भस्थत्वसन्देहेन कृत्रिमादिकरणमिति वंशधरोपाध्यायाः व्यवहारस्तु तत्तन्मतानुयायिनांतत्तन्मतव्याख्यानुसारेणेति ॥

अथ पुत्र लक्षणमाह मनुः संस्कृतायांतुभार्यायांस्वयमुत्पादयेत्तुयम् तमौरसंविजानीयात्पुत्रं प्रथमकल्पितम् तथा च स्वपाणिगृहीतायां स्वोत्पादितःपुत्रऔरसइत्यर्थः पुत्रिकापुत्रमाह वशिष्ठः अभ्रातृकाम्प्रदास्यामितुभ्यंकन्यामलंकृताम् यद-

पत्यंभवेदस्यांतन्ममस्यात्सुधाकरम् सुधाकरं श्राद्धकरमित्यर्थः तथा च कन्या दानकालेऽस्यांयः पुत्रोभविष्यति सममपुत्रोभविष्यतिइति व्यवस्थानन्तरं तस्यां यः पुत्रो भवति स पितृ-मातामहयोर्द्वयोरपिश्राद्धाधिकारी तदाह देवलः तत्तुल्यः पुत्रिकापुत्रोदायादस्सोथवाभवेत् पितुर्मातामहस्यापिनिरपु-त्रस्यपुत्रवदिति ॥

अथ पौनर्भवमाह विष्णुः यातुपित्रापरित्यक्ताविधात्रास्वे-च्छयाथवा उत्पादयेत्पुनर्भूत्वात्सपौनर्भवउच्यते पुनर्भूत्वापुनः पुरुषान्तरेण सवर्णेनात्मानं विधाय यं पुत्रमुत्पादयति स पौनर्भवः कात्यायनः क्लीवम्विहाय पतितंयापुनर्लभतेपतिम् तस्याम्पौनर्भवोजातोव्यक्तमुत्पादकस्य स इति ॥

अथ दत्तकानाह मनुः मातापितावादद्यात्तांयमद्भिः पुत्र-मापदि सदृशम्प्रतिसंयुक्तौसज्ञेयोदत्तकःसुतः अद्भिः जलैः जलपदं तिलकुशानोनामप्युपलक्षकम् आपदि पुत्रासत्त्वेस-दृशं समानजातीयम् प्रीतिसंयुक्तावित्यनेन भयलोभादिना कृतो न दत्तकः किन्तु प्रीत्याकृतोदत्तकइति पर्यवसितम् तत्रापिसतिपत्यौ तदाज्ञया असति पत्यौ तदाज्ञाविरहेपिस्त्रि-यादौनाधिकारः न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञा-नाद्भर्तुरिति वसिष्ठवचनात् असति पत्यौ अनुज्ञांविनापि इति वाचस्पतिलिखनाच्च एवं शूद्रस्यापि दानेऽधिकारो न ग्रहणेस्त्रीशूद्राश्चसधर्माण इति वचनात् स्त्रीशूद्रग्रहणयोर्निषे-धस्तु पुत्रग्रहणाङ्गभूतवैदिकमन्त्रसाध्य व्याहृतिहोमे तयोर-नधिकारात् एकपुत्रवतां पुत्रदाऽनेनाधिकारः नन्वेकं पुत्रं द-

द्यात्पतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषामिति वासिष्ठात् ॥

अत्रपुत्रग्रहणप्रकारः प्रथमंनित्यकर्मविधाय अग्निस्थापनं कृत्वा द्यावाज्यभागौहुत्वामहाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यस्विष्टकृद्धोमञ्च कृत्वा व्याहृतिहोमं कुर्यात् होमानन्तरं पूर्णाहुतिं दत्वा पुत्रं गृह्णीयात् दत्तकस्य जनकगोत्रन्तत्पिण्डदातृत्वं न तिष्ठति तथाहि मनुः ऋक्थगोत्रेजनयितुर्नहरे द्दत्रिमस्सुतः ऋक्थगोत्रानुगःपिण्डोव्यपैतिददः स्वधेति किन्तु येन गृहीतः तस्यैव गोत्रं पिण्डदत्वं धनहारित्वं च दत्तकस्य॥

अथ कृत्रिमपुत्रमाह मनुः सदृशंयंप्रकुर्वीतगुणदोषविचक्षणं पुत्रंपुत्रगुणैर्युक्तंसज्ञेयःकृत्रिमस्सुतः सदृशः समानवर्ण इति विवादचन्द्रात् ॥

कृतिमस्तु मत्पुत्रत्वकरस्यपिण्डप्रदः निजपित्रादीनाञ्च पिण्डप्रदः व्यामुष्यायनः तद्विविधस्तुपुत्रकर्त्तात्वम्ममपुत्रोभवेतिवदेत् तवपुत्रोभूतोस्मीतिकर्तावदेत् वस्तुदानमत्राचारप्राप्तंनत्वावश्यकं पुत्रकरणे उभयोरनुमतिरेवप्रयोजिका तेनवाक्यविशेषस्यनपुरस्कारइति ए प्रवरः भ्रातृणां मध्ये ज्येष्ठस्सोदरभ्रातृरहितो ऽपि कृत्रिमो भवत्येव अपवादकाभावात् । पुत्राभावे पौत्रस्तु तदभावे प्रपौत्रोऽधिकारीतथाहि विष्णुः पुत्रःपौत्रःप्रपौत्रोवातद्वद्वाभ्रातृसन्ततिरिति प्रपौत्राभावे पत्नी तदभावेसहोदरः तथाहि शङ्खः पुत्रा भावेतुपत्नीस्यात्तदभावे सहोदरः इति पुत्रपदमत्रपौत्रप्रपौत्रयोरप्युपलक्षकमिति स्मृतिसमुच्चये हरिनाथोपाध्यायाःअतो न विष्णुः क्रमःविरोधः सहोदरेष्वपिप्रथमं कनिष्ठः कनिष्ठाभावेज्येष्ठः नपुत्रस्य

पितादद्यान्नानुजस्यतथाग्रजइति कनिष्ठभ्रातृसद्भावेज्येष्ठस्या नधिकारबीजकछन्दोगपरिशिष्टवचनात् तत्राप्यव्यवहितावेव- ज्येष्ठकनिष्ठौप्रथमत्यागोमानाभावादितिन्यायात् सोदराभा- वेपिता तत्रप्रचेताः पुत्रोभ्राता पिता वापि इति पुत्रपदमत्र- पत्नीपर्यन्तोपलक्षकमतो नविष्णु पुराणादिविरोधः पितुरभावे सोदरभ्रातृपुत्रःपुत्रःपौत्रः प्रपौत्रोवा तद्वद्वाभ्रातृसन्ततिरिति विष्णुपुराणात्भ्रातृसंततिः सोदरभ्रातृपुत्रःतदभावेस्नुषा इति वाचस्पतिमिश्राः तदभावेसपिण्डाअधिकारिणः पुत्राभावेस- पिण्डाइतिगोतमवचनात् पुत्रपदमत्रास्नुषापर्य्यन्तोपलक्षकम् सपिण्डेष्वपिसन्निहित ज्येष्ठसपिण्डोधिकारीसपिण्डाभावेदु- हिताधिकारिणी अपुत्रस्यचयापुत्री सापिपिण्डप्रदाभवेदिति- वचनात् दुहितुरभावेऽष्टमपुरुषा दिसमानोदकसन्ततिः स- पिण्डसन्तत्यंतमभिधायएषामभावे सर्वेषांसमानोदकसन्तति- रिति विष्णुपुराणात् मनुः समानोदकभावस्तुनिवर्त्तेताच- तुर्दशादिति समानोदकाभावेमातृसपिण्डास्तेषामभावेमातृ- समानोदकाः ॥

तथाहि विष्णुपुराणम् मातृपक्षस्यपिण्डेनसम्बन्धो योज- ळेनचेति पिण्डेनसम्बन्धः सपिंडः जलेनसम्बन्धस्समानोदक इत्यर्थः । उभयकुलाभावे माता स्वामाता कुरुते तेषां तेपि तस्याश्च कुर्वंते इतिवचनात्तेषां पुत्राणां मातुरभावे यथा क- थंचिदधृतास्त्रीकुलद्वयेपि चोच्छन्ने स्त्रीभिः कार्य्याक्रियानृपेति वचनात् स्त्रीभिरिति अयथापरिगृहीतस्त्रीभिः इति पुरुषश्रा- द्धाधिकारिणः। स्त्रि यास्त प्रथमं औरस पुत्रोधिकारी तद-

भावे सपत्नीपुत्रः तदभावेकृत्रिमादयः विदध्यादौरसःपुत्रो जनन्या औद्ध्वंदेहिकं तदाभावेसपत्तोजः कृतिमाद्यास्तुनावृत्ते इति वामदेवोपाध्यायधृतस्मृतेः तावृतेऔरसपत्ती पुत्रा भ्यांविनेत्यर्थः तदाभावेपतिस्तदाभावेस्नुषातदभावे पौत्रप्रपौत्रो क्रमेण तयोरभावे सपिंडाः तथाहि शङ्खः भार्य्या पिंडे पतिर्दद्यात्पत्यौ भार्य्यातथैवच श्वश्र्वादेश्चस्नुषा चैवतदभावेसपिंडका इति श्वश्र्वादेरित्यादिपदात् श्वशुरपरिग्रहः तेनैतद्वचनवलादेव भ्रातृसत्वेपत्यादेवरादिसत्वे श्वश्रूश्राद्धे सपिंडसत्वेचश्वशुरश्राद्धेस्नुषायाअधिकारः सिद्धइति श्राद्धचिन्तामणौवाचस्पतिमिश्राः सपिंडाभावेसकुल्याः तदभावेपितृसंपिंडा इति शुद्धिविवेकेतु पुत्राभावेपतिस्तदभावेसपत्नीपुत्र इति लिखनंसंप्रतिमिथिलाव्यवहारविरुद्धमतस्तदुपेक्ष्यं शुद्धिविवेककृतापि व्यवहारविरोधाद्रत्नाकरलिखनस्योपेक्षणात् । पुत्रपत्नीपुत्रपतिरहितायां स्सपिंडनन्नास्ति किन्तुवक्ष्यमाणा वीराकल्पविधानेन चतुर्थादिदिनक्रमेणैवश्राद्धमधिका रिणा कर्त्तव्यं तथाहि सरोजकलिकायां गोभिलः अपुत्रायांमृतायान्तुपतिः कुर्य्यात्सपिण्डनं अभावेयत्पुरेवास्याः पुत्राभावेतुयोषितः सपिण्डीकरणन्नास्तिनारदोमुनिरब्रवीत् अन्यच्च पुत्रेणैवतुकर्त्तव्यंसपिंडीकरणंस्त्रियः पुरुषस्यपुनस्त्वन्यभ्रातृपुत्रादयोपिये पुत्राभावेपतिः कुर्य्यात्पत्यभावेचनेष्यते । पुत्रपदमौरसादिपुत्रसपत्नीपुत्रोभयपरं वह्वी नामेकपत्नीनामेकाचेत्पुत्रिणीभवेत् । सर्वास्तास्तेनपुत्रेणपुत्रिण्योमनुरब्रवीत् इतिमनुवचनात्तस्यापि पुत्रत्वात् एकपत्नीना-

मिति एकःपतिर्य्यासान्ताः एकपत्न्यः तासामित्यर्थः । मार्कं-डेयपुराणे सपिंडीकरणं तासां पुत्राभावेनविद्यतेइति तत्रां स्त्रीणांपुत्रपदभर्त्रा जहत्स्वार्थलक्षणया पतिसपत्नीपुत्रयोरप्यु-पलक्षम् अतो न व्यावहारविरोधः पुत्रपत्नीपुत्रशून्यस्त्रियाअ-वीराकल्पश्राद्धमाह ब्रह्मपुराणे चतुर्थेपंचमेचैवनवमैकादशंतथा ततोद्वादशभिर्मासैःश्राद्धाद्द्वादशसंख्यया तथा च चतुर्थ पंच-मनवमैकादशदिनेषु तत्तद्दिनंश्राद्धंकृत्वाद्वादसमासेषु प्रतिमा-सक्षयाहेषुद्वादशमासिकानिकार्य्याणीत्यर्थः । चतुर्थादिदिन-मतीत्यमरण श्रणदिनएवातीत श्राद्धं विद्यमानदिनश्राद्धं च कृत्वाअधिकारी भाविदिन श्राद्धं भावितत्तच्छ्राद्धदिनेकुर्य्यात् ॥

अथ तत्श्राद्धप्रयोगः चतुर्थदिनेऽस्थिसंचयं कृत्वाअप-वित्रः पवित्रोवेत्यादिना अन्नादीन् सिक्त्वाकुशादिकमादाय ओंअमुकगोत्रायास्सपिंडायाअमुकप्रेतायाः प्रेतत्वविमुक्ति-कामोऽद्यादि यथाकालं षोडशश्राद्धान्यहंकरिष्ये इति सङ्क-ल्प्यषोडशश्रद्धान्तर्गतचतुर्थदिनश्राद्धसङ्कल्पागायत्रीं देवताभ्य इति त्रिर्जपित्वा ओंअद्यामुकगोत्रेसपिंडे अमुकप्रेते चतुर्थ-दिनश्राद्धे इदमासन तेमयादीयते तत्रोपतिष्ठताम् एवं क्रमेण चतुर्थादिदिनेषु उद्देशेनैकोद्दिष्टं कृत्वा एकादशदिने शय्या कांचनपुरुषद्विजदम्पती पूजनकपिलादानवृषोत्सर्गान् कृत्वा एकादशाह श्राद्धं कुर्य्यात् ततो द्वादशमासेषुक्षयतिथौद्वादश मासिकानि कुर्य्यादिति श्राद्धविवेकाद्यनुसारीयः पन्था यदि विगोत्रःश्राद्धकर्त्ता तदा चतुर्थदिने कांचनपुरुषदानद्विजदम्प-तीपूजनवृषोत्सर्गकपिलादानानि कुर्य्यात् तस्या शौचांतद्दिती यद्दिनस्वाद्दिति श्राद्धविवेकः ॥

अथ मृतस्य डोषशश्राद्धाकरणे ऽधिकारिणः पातीत्यंमृतस्य च प्रेतत्वम् तथाहि सरोजकलिकायां नकरोतिच्चयः श्राद्धम्पित्रादीनाम्विशेषतः । पातित्यञ्जायतेतस्यसर्वंकर्मविगर्हितम् अन्यच्च यस्यैतानिनदीयन्तेप्रेतश्राद्धानिषोडश । प्रेतत्वंहिस्थिरन्तस्यदत्तैःश्राद्धशतैरपीति । एतच्चाधिकारिणः शौचेविहितकालजोवित्वे चसति बोध्यम् ॥

अशौचेविहितेकालेऽजीवनेवाधिकाराभावात् नैतादृशदोषप्राप्तिः । स्मृतिः अशौचान्तद्वितीयेन्हिशय्यान्दद्याद्विलक्षणाम् कांचनम्पुरुषन्तद्वत्फलवस्त्रसमन्वितम् सम्पूज्यद्विजदाम्पत्यन्नानाभरणभूषितं वृषोत्सर्गस्तुकर्तव्योदेयाचकपिलाशुभा इति ॥

अत्रविगोत्रोयदिश्राद्धकर्त्ता तदा चतर्थदिनेशय्याकांचनपुरुषकपिलादानदम्पतीपूजनवृषोत्सर्गां श्चकुर्य्यात्तस्याशौचान्तद्वितोयदिनत्वादितिश्राद्धविवेकः द्वैतनिर्णयेतु एकादशाहोत्यन्नाशौचेनयथाद्यश्राद्धप्रतिरोधस्तदातदशौचान्ते श्राद्धकरणे शय्यादानादिवृषोत्सर्गश्चनभवति तद्दिनेप्रापकाभावात् प्रकृताशौचमुपक्रम्याशौचान्तद्वितीह्नीयेतिश्रवणात् यत्रतुसङ्करेणाशौचवृद्धिः तत्रद्वितीयसन्निपातेप्रकृताशौचस्याभिवृद्धिरितिसिद्धांतात् तत्रशय्यादिकंभवतातिवाचस्पतिमिश्राः ॥

वृषोत्सर्गफलमाह सरोजकलिका धृतस्मृतिः वृषभस्यतुशब्देनपितरःसपितामहाः । वर्तमानाःप्रदृश्यन्ते स्वर्गलोकेनसंशयः । जलंप्रविश्यलाङ्गूलैर्यत्तोयंवहतेवृषः । दशवर्षसहस्राणिपितरस्तेनतर्पिताः । तत्र नोलवृषः श्रेष्ठः तल्लक्षणमाह

स्मृतिः चरणानिमुखम्पुच्छंयस्यश्वेतानिगोपतेः लाक्षारससवर्णश्चतन्नोलमितिनिर्द्दिशेत् गोपतेर्वृषभस्य लाक्षां लोहितो प्रसिद्धा वर्णानां विशेषतो विहितवृषभमाह स्मृतिः वर्णतस्ताम्रकपिलोब्राह्मणस्यप्रशस्यते। स्निग्धरक्तेनवर्णेनक्षत्रियस्यप्रशस्यते। काञ्चनाभेनवैश्यस्यकृष्णेनाप्यन्त्यजन्मनः। अन्त्यजन्माशूद्रः एतेन शूद्रस्य वृषविशेषो पदेशात् वृषोत्सर्गाधिकारेसिद्धेऽत्र वैदिकमन्त्रा अपितेन पठनोयाः वृषोत्सर्गान्यथानुपपत्तेः तयैरेवोत्सृजेरन्निति वचनाच्च। तयैववैदिकऋचैव शूद्रस्य वृषोत्सर्गवाक्ये एव वेदपाठो नान्यत्रेति श्राद्धविवेकाच्च शूद्रवत् स्त्रिया अधिकारवोधने प्रमाणाभावान्न वृषोत्सर्गेऽधिकारः एवमनुपनीतत्रैवर्णिकस्य वेदशून्यतया न वृषोत्सर्गेऽधिकार इत्यपिसएव व्यवहारस्तुब्राह्मणद्वारारुद्राध्यायादिवैदिकमन्त्रपाठइत्येवशूद्रस्य। वृषश्चात्र तरुणः वत्सतर्य्यश्च त्रिहायन्यः एतंयुवानंपतिंवोददानी तिऋचः अष्टाभिर्द्धेनुभिर्युक्तश्चतुर्भिरथवाक्रमात्। त्रिहायनीभिर्द्धान्याभिः स्वरूपाभिः सुशोभिता इति द्वैतनिर्णय धृतवचनाच्च। त्रिहायनीत्रिवर्षाअग्रिमपाददक्षिणपार्श्वे चक्रेण पश्चिमपादवामपार्श्वेत्रिशूलेन वृषमङ्कयेदिति श्राद्धरत्नाकरादयः॥

एकादशाह श्राद्धं सांवत्सरिकश्चसिद्धान्नेनैवकर्त्तव्यम् एकोद्दिष्टन्तु कर्त्तव्यंपाकेनैवसदास्वयं। अभावेपाकपात्राणान्तदहस्समुपोषणमितिहारीतवचनात्। एकोद्दिष्टमेकपुरुषोद्देश्यकंकर्म्म अनुपनीतेनापि आद्यश्राद्धंसांवत्सरिकंचसिद्धान्नेनैव कर्त्तव्यंप्रागुक्तत्वात् तदन्नन्तुगोभ्योदद्याजलेवा। मासिकस्यै-

कोद्दिश्यकत्वेपिव्यवहारादपूपेनापिचर्त्तव्यत्वं। जावालः आपद्यनग्नौतोर्थेचचन्द्रसूर्यग्रहेतथा। आमश्राद्धंद्विजैः कार्य्यं शूद्रेणतुसदैवहीति। आपदिश्राद्धकर्त्तुर्देशकालयोश्चोपल्पवे। तेनस्वाशक्तौदेशेकालेचपाकक्रिययाश्राद्धा संभावनायानामश्राद्धमिति श्राद्धविवेकः। आमश्राद्धं असिद्धान्नेनश्राद्धं अनग्नौ पाकयोग्याप्यभावे आमश्राद्धेपिण्डादिकमप्यामान्नेनैव तेनाग्नौकरणंकुर्य्यात् पिण्डास्तेनैवनिर्वपेत् इति जवालवचनात्। अमावास्यादिकाम्यश्राद्धमामान्नेनैव श्राद्धविघ्ने द्विजातोनामामश्राद्धं प्रकीर्त्तितं अमावास्यादिनियतं माससंवत्सरादृतेइतिलघुहारीतवचनात् आमश्राद्धेमांसादिव्यंजनानि आमान्येवदेयानिइति श्राद्धपल्लवः। सांवत्सरिकैकोद्दिष्टमविभक्तैरपि सर्वैरेवभ्रातृभिः कर्त्तव्यं पार्वणन्तु अविभक्तेषु ज्येष्ठेनैवविभक्तैः सर्वैरेवकर्त्तव्यं तथाहि विभक्ताअविभक्तावाकुर्य्युः श्राद्धमदैविकं। मघासुचतथान्यत्रनाधिकारः पृथग्विना। अदैविकंविश्वेदेवकर्मरहितं एकोद्दिष्टमिति यावत्। मघासु मघानिमित्तकश्राद्धेषु अन्यत्र तद्भिन्नपार्वणे पृथग्विना विभागंविना। सर्वेषान्नाधिकारइत्यन्वयः॥

अथ श्राद्धे प्रशस्तद्रव्याण्याह मत्स्यपुराणे उच्छिष्टं शिवनिर्माल्यं वान्तं च मृतकर्पटम्। श्राद्धेसप्तपवित्राणिदौहित्रः कुतुपस्तिलाः। उच्छिष्टं गव्यदुग्धादिशिवनिर्माल्यं गङ्गाजलम् वान्तं मधु मृत कर्पटं पट्टवस्त्रम् दौहित्रः खड्गपात्रं कुतुपो मध्याह्नवेला अथवा दौहित्रो दुहितृसुतः कुतुपो नेपालकम्बलः तथाहि स्मृतिः व्रतस्थमपिदौहित्रंश्राद्धे यत्नेनभो

जयेत्। कुतुपश्चासनन्दद्यात्तिलैश्चविकिरेन्महीमिति। मिताक्षरायां याज्ञवल्क्यः हविष्यान्नेन वैमासम्पायसेनतुवत्सरम् मात्स्यहारिणकौरभ्रशाकुनच्छगपार्षतैः। ऐणरौरववाराहशाशमांसैर्यथाक्रमम्। मासवृद्ध्याभितृप्यन्तिदत्तैरिहपितामहाः। खड्गामिषमहाशल्कंमधुमुन्यन्नमेवच। लौहामिषंमहाशाकंमांसम्वार्द्धीणसस्यच। यद्ददातिगयास्थश्चसर्वंमानन्त्यमश्नुते हविष्यान्नंहवियोग्यतिलव्रीह्यादि मासंमासपर्यन्त अस्यच पितामहाः पितरः तृप्यन्तीतिपरेणान्वयः एवं वत्सरेणेत्यादावप्यन्वयः मत्स्यं। मत्स्यसंबंधि अस्य मांसैरिति परेणान्वयः हरिणस्ताम्रमृगः एणः कृष्णमृगोजेयस्ताम्रोहरिणउच्यते इत्यायुर्वेदस्मरणात् उरभ्रो मेषः शाकुनं भक्ष्यपक्षिसंबन्धि पृषच्चित्रमृगः तत्संबन्धिपार्षतं रुरुः सावर इति प्रसिद्धः शशस्येदं शाशं खड्गोगण्डकः महाशल्कोमत्स्यभेदः मुन्यन्नं नीवारादिः नीवारओइरीइति प्रसिद्धः लोहारक्तच्छागः महाशाककालशाकम् वार्द्धीणसोवृद्धश्वेतच्छागः त्रिपिवंत्विन्द्रियाक्षीणंश्वेतं वृद्धमजा पतिम् वार्द्धीणसन्तुतंप्राहुर्याज्ञिकः पितृकर्मणि। पिवतःकर्णौजिह्वाचयस्यस्पृशतिमत्त्रिभिः पिवतीतित्रिपिवः अन्यत्सुगमं॥

श्राद्धेनिषिद्ध द्रव्याण्याह कूष्माण्डंमहिषीक्षीरंविल्वपत्रमगद्विजाः। श्राद्धकालेसमुत्पन्नेपितरोयान्ति निराश्रयाः। मगद्विजाः शाकद्वीपिब्राह्मणाः विल्वपत्र मगद्विजा इति पाठस्य प्रामादिकत्वे तु अगद्विजाः पर्वतीब्राह्मणा इत्यर्थः॥

श्राद्धोत्तरत्याज्यानाह पुनर्भोजनसंचारंनिद्राध्ययनमैथु-

नम् । होमंप्रतिग्रहंसंध्यांश्राद्धंकृत्वाष्टसंत्यजेत् पुनर्भोजनं गलकवलसंयोगरूपम् संचारं क्रोशादूर्ध्वंगमनमिति रसमालायाः अध्वगमने क्रोशपूरणमिति हारीतोक्तेः श्राद्धे तदूर्ध्वंगमने दोष इति संख्यापरिमाणे केशवमिश्राः ॥

सव्रणःसूतकोसूयीमत्तोन्मत्तरजस्वलाः । मृतवन्धुरवन्धुश्चवर्ज्यान्यष्टौस्वकालत इति वचनात् सक्षतस्य श्राद्धनिषेधः व्रणसत्त्वे एव स्वकालत इति श्रुतेः तद्दिनेनि व्रणीभावे इति वचनाच्च व्रणान्ते व्रणाधिकरणदिनेपि श्राद्धकरणे न दोष इत्यायाति ॥

मासिकादिद्वादशमासेक्षयतिथौद्वादशमासिकानि दिनैकोषष्टमासे ऊनषाण्मासिकम् दिनैकोनद्वादशमासे ऊनवार्षिकमिति गौडदेशीयसमुदायः मुख्यंश्राद्धं मासिमासीतिवचनात् मैथिलसमुदायास्तु द्वादशदिने एव सर्वमासिकानि सपिण्डनं च आनन्त्यात्कुलधर्म्माणांपुंसाञ्चैवायुषक्षयात् । अस्थितेश्चशरीरस्यद्वादशाहःप्रश स्यते इति व्याघ्रपादवचनात् तस्यापि प्रशस्तत्वात् द्वादशाहपदमलाशौचांततृतीयदिनोपलक्षकम् नतस्त्र्यहा घशौच्चिनः पंचमादिदिने सर्वमासिककरणेऽप्राशस्त्यम् ॥

अर्वाद्द्वितीयपक्षेपंचममासिकानन्तरं ऊनषाण्मासिकं एकादशमासिकानन्तरम् ऊनवार्षिकंकर्त्तव्यं मृतसम्बधिपित्रादित्रयपिण्डेमृतपिण्डमेलनं सपिण्डनेकर्त्तव्यं तथाहि पितामेहनपितरंसंस्कुर्य्यादितिनिश्चय इति तत्र पुत्रेण सपिण्डीकरणे क्रियमाणे पितरमुकप्रेतपितामहप्रपितामहवृद्धप्रपिता-

महामुकामुकशर्मन्निति वाक्यं भ्रातृभ्रातृजादिभिः क्रियमाणे भ्रातुरमुक पितृव्य इत्यादिवाक्येन तत्तत्सम्बन्धमुच्चार्य्य पिण्डमेलनम् कृत्रिमपुत्रेण क्रियमाणे तु मत्पुत्रत्वकर पितरममुकशर्म्मन् इत्यादिवाक्येन तत्तत्संबंधमुच्चार्य्य पिंडमेलनं कुर्य्यात्। सपिण्डीकरणपर्य्यन्तमेव प्रेतपदप्रयोगः तथाहि सपिण्डीकरणं यावत्प्रेत प्रेत इति स्मृतः सपिण्डीकरणादूर्ध्वं शर्म्मवर्म्मादिभाग्भवेदिति ॥

स्त्रियास्तु जीवति पत्यौ मृतस्त्रीश्वश्रूप्रश्वश्रूवृद्धप्रश्वश्रूपिण्डेषु स्त्रीपिण्डमेलनम् तथाहि गोभिलः अपुत्रायां मृतायां तु पतिः कुर्य्यात्सपिण्डनम्। श्वश्वादिभिः सहैवास्याः सपिण्डीकरणम्भवेदिति। पत्यौ मृते तु पतिश्वशुरप्रश्वशुरपिण्डेषु स्त्रीपिंडमेलनमिति समाचारः। अथ चतुर्थीहोमात्प्रागेव स्त्रियामरणे सपिंडीकरणान्तानि तस्याः श्राद्धानि पत्या तद्गोत्रेणैव कार्य्याणि सांवत्सरिकानि तु स्वगोत्रेणैव संस्थितायान्तु भार्य्यायां सपिंडीकरणान्तिकं पैतृकं भजते गोत्रमूर्द्धन्तु पतिपैतृकमिति श्रुतेरिति एवन्तदानीम्पतिप्रायणे पिन्यायतोल्पात् विगोत्रयापि भार्य्यया श्राद्धानि कार्य्याणीति दिगिति द्वैतपरिशिष्टम्। सपिंडीमरणादूर्द्धं यावदब्दत्रयं भवेत् तावदेव न भोक्तव्यं श्राद्धीयान्नं क्षयेऽहिनि प्रथमाब्दे तु मांसानि द्वितीये स्थी निद्वैव हि तृतीये रुधिरं भुक्तं चतुर्थेऽन्नं विशुद्ध्यतीति वचनाद्वार्षिकत्रय एव श्राद्धीयोत्सृष्टान्नभक्षणे दोषः चतुर्थवत्सरीय क्षयाहश्राद्धान्नभक्षणदोषश्च मैथिलव्यवहारादेवेति न किंचिदनुपपन्नम् ॥

अथ जलादिशुद्धिः तत्र मनुः आपः शुद्धा भूमि गतावि-

तृष्णायत्रगौर्भवेत् । अव्याप्ताश्चेदमेध्येनगन्धवर्णरसान्विताः । दिवासूर्य्यांशुभिःशुद्धंरात्रौनक्षत्रमारुतैः । सन्ध्ययोरप्युभाभ्यां-चपवित्रंसर्वदाजलम् । देवलः एकरात्रोषितास्तास्तुत्यजेदापः समुद्धृताः । उषिताः पर्युषिताः । स्कान्दे वर्ज्यंपर्य्युषितंतो-यंवर्ज्यंपर्य्युषितंदलं । अवर्ज्यंजाह्नवीतोयमवर्ज्यंतुलसी-दलं । तोयंजलंपर्य्युषितंवासिइतिप्रसीद्धंदलंपत्रंक्षदः पुमा-निति अमरकोषात् दलंपत्रंयमः । प्रपामरण्येघटकञ्चकूपेद्रो णीजलङ्कोशगतास्तथापः । ऋतेपिशूद्रातदपेयमाहुराप द्गता भूमिगताः पवित्राः प्रपा पानीयशाला इति प्रसिद्धा द्रोणी काष्ठांवुवाहिनीति कोषः कोशः चर्मपुटः बृहस्पतिः वापीकूप-तडागेषुदूषितेषुविशोधनम् । घटानांशतमुद्धृत्यपञ्चगव्यंततः क्षिपेत् । वापीसोपानयुक्तः कूपः यत्र शतघटान्यूनमेवजलं तत्र सर्वोद्धारमात्रम् मरीचिः येषुस्थानेषुयच्छौचं धर्म्माचारश्चया-दृशः । तत्रतन्नावमन्येतधर्म्मस्तत्रैव तादृशः येषुदेशेषुयेदेवा येषुदेशेषुयेद्विजाः । येषुस्थानेषु यत्तोयंयाश्चयत्रैवमृत्तिका इति मृत्तिकेत्यस्य तत्रतन्नावमन्येत इति पूर्वेणान्वयः । यमः अजागावोमहिष्यश्चब्राह्मणीचप्रसूतिका । दशरात्रेण शुध्यन्ति-भूमिष्ठंचनवोदकम् ॥

याज्ञवल्क्यः भूशुद्धिर्मार्ज्जनाद्दाहात्कालाद्गोक्रमणादपि । सेकनोल्लेखनाल्लेपाद्गृहंमार्जमलेपनात् । कालादिति अपवित्रताप्रयोजककारणक्षयो यावत्कालेनभवति तावत्काला दित्यर्थः सेकः प्रक्षालनम् उल्लेखनंतत्क्षणम् मनुः सम्मार्ज-नेनाञ्जनेनसेकेनोल्लेखनेनच । गवांचपरिवासेनभूमिःशुध्यतिप-

श्वभिः। अञ्जनं गोमयोपलेपनम् बौधायनः घनाया भूमेरुपलेपनम् शुषिरायाः कर्षणम् क्लिन्नाया अमेध्यमाहृत्य प्रच्छादनं। घना अविषमासमेति यावत् शुषिरा विवरयुक्ता शुषिरंविवरंविलमित्यमरकोषात् क्लिन्ना अमेध्यातस्याअमेध्यमाहृत्यमृदन्तरेणपूरणे शुद्धिः॥

ब्रह्मपुराणे सुवर्णरूप्यशङ्खाश्मशुक्तिरत्नमयानिच। कांस्यायस्ताम्ररैत्यानित्रपुशीशमयानिच। निर्लेपानिचशुध्यन्ति केवलेनोदकेनतु। शूद्रोच्छिष्टानिशोध्यानित्रिधाक्षाराम्लवारिभिः सूतिकाशवविण्मूत्ररजस्वलहतानिच। प्रक्षेप्तव्यानितान्याग्नौयच्चयावत्सहेदपि अश्म प्रस्तलम् अयो लोहम् रीतिः पित्तलम् तद्घटितपात्रं रैत्यम् त्रपुरङ्गम् निर्लेपं अनुपहतम् उच्छिष्टानि उच्छिष्टस्पृष्टानि उच्छिष्टे शङ्खवचनेन शुद्ध्यन्तरस्यवक्ष्यमाणत्वात् क्षारो भस्म अम्लवारिभिः जंबीरादिरसैः तत्र क्षारं कांस्यादौ अम्लोदकम् ताम्रादौ अत एव शङ्ख उष्णोदकेन ताम्रस्यशिं शस्यत्रपुसस्तथा। क्षारेणशुद्धिः कांस्यस्यलौहस्य च विनिर्दिशेदिति बौधायनः तैजसानां तु पात्राणामुच्छिष्टोपहतानां त्रिस्सप्तकृत्वः परिमार्जनम् परिमार्जनं मृद्गोमयभस्मभिरिति। मूत्रपुरीषरेतः प्रभृत्युपहतानां पुनःकरणंगोमूत्रेवासप्तरात्रं संस्थाप्यपूर्ववन्मार्जनम्। शातातपः॥

गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषु वा पुनः। दशभिर्भस्मभिःशुद्धिःश्वकाकोपहतेषुच। अङ्गिराः

गण्डूषंपादशौचं च यःकुर्य्यात्कांस्यभाजने। भूमौनिः

क्षिप्यषण्मासान्पुनराक्रमादिशेत् । आकरमादिशेद्वन्हौ क्षिपेत् ॥

शङ्खः सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्यच त्रिःसप्तमार्जनैःशुधिर्न तुकांस्यस्यभाजने देवलः काष्ठानां तत्क्षणाच्छुधिर्मृद्गोमयजलैरपि । मृण्मयानांतुपात्राणां दहनाच्छुधिरिष्यते । इदमत्यन्तोपहते देवलः तान्तरम्मलिनंपूर्वमद्भिः-क्षारैश्चशोधयेत् । अंशुभिःशोषयित्वावावायूनावासमाहरेत् ।

ऊर्णापट्टांशुकक्षौमदुकूलाविकचर्मणाम् अल्पाशौचेभवेच्छुधिःशोषणप्रोक्षणादिभिः । अल्पोपघातइदम् ब्रह्मपुराणे प्रत्यहं क्षालयेद्वस्त्रंदैवेपैत्र्येचकर्मणि ।

सर्वंविण्मूत्रशुक्रैश्चदूषितं तुमृदंवुभिः । शुध्यतीति शोषेण पूरणीयः शुक्र वीर्य्यं मनुः चरुणांस्रुक्स्रुवाणांच शुद्धिरुष्णेन वारिणा । स्फ्यसूर्प्यशकटानांचमुशलोदूषणस्यच अद्भिस्तत्प्रोक्षणंशौचंवहूनांधान्यवाससाम् । प्रक्षालनेनत्वल्पानामद्भिःशौचंविधियते । स्फ्यः खदिरःखड्गः वहूनामिति वहुवचनत्वं च पुरुषभारहर्य्योधिकत्वमिति स एव चैलवच्चर्मणां शुधिर्वैदलानां तथैवच । शाकमूलफलानांचधान्यवच्छुधिरिष्यते । चर्मणामिति स्पृश्य पशुचर्मणामित्यर्थः वैदलानां वंशादिदलनिर्मितानामिति मनुटोकायां कुलूकभट्टः मनुः प्रोक्षणात्तृणकाष्ठश्चपलाशश्चविशुध्यति । मार्जनोपाञ्जनैर्वेश्मपुनः पाकेनमृन्मयम् । उपांजनं लेपनम् । वौधायनः । आसनंशयनंयानंनावः पन्थास्तृणानिच मारुतार्केणशुध्यन्तिपक्वेष्टकचितानिच आसनादिकं स्त्रीयमेवात्र वोध्यम्वौधायनः

बहूनां कुसुम्भकार्पासगुडलवणानां सर्पिषां कठिनीभूतानाम् श्वचाण्डालस्पर्शे प्रोक्षणेन शुद्धिः मनुःशुद्धाभर्तुश्चतुर्थेह्निस्नानेनस्त्रीरजस्वाला । दैवेकर्म्मणिपित्र्येचपंचमेहनिशुध्यति । प्रथमेहनिचाण्डाली द्वितीयेब्रह्मघातिनी । तृतीयेरजकीप्रोक्ताचतुर्थेहनिशुध्यति । प्रथमेहनिरजोयोगारम्भदिने चाण्डालीति चाण्डालीवदस्पृश्यानतुवस्तुगत्याचाण्डालीति । ब्रह्मपुराणे मक्षिकादंशमसकाघुणाः शूक्ष्मपिपीलिका आमिषामेध्यसेवोचनैतेकीटाविपत्तये । दंशाउडशाइतिप्रसिद्धः । आमिषामेध्यसेवीझटितमांसोद्भवकीटः विपत्तये अन्नदोषाय ॥

आममांसंघृतंक्षौद्रं स्नेहाश्चफलसम्भवाः । म्लेच्छभाण्डस्थितादूष्यानिःक्रान्ताःशुचयः स्मृताः । आमम् प्रसिद्धम् क्षौद्रम् मधु । शातातपः गोकुलेकन्दुशालायांतैलयन्त्रक्षुन्त्रयोः । अमीमांसानिशौचानिस्त्रीषुबालातुरेषुच । मीमांस अत्र विचारः अमीमांसानिअविचारतानि तेषु शौचाशौचविचारो न कर्त्तव्यः अविचारितान्येवशौचानीति भावः बालः पञ्चवर्षवयस्कः ॥

मनुः नित्यंशुद्धःकारुहस्तः पण्येयच्चप्रसारितम् । ब्रह्मचारिगतमभैक्ष्यंनित्यम्मेध्यमितिस्थितिः । कारुः शिल्पी । पण्यं पणग्राह्यम् प्रसारितमहट्टायाम् तथा च एतत्सर्वममेध्यानुपहतम् सर्वस्मिन् काले शुद्धमित्यर्थः । श्वभिर्हतस्ययन्मांसंशुचितन्मनुरब्रवीत् । क्रव्याद्भिश्चहतस्यान्यैश्चाण्डालाद्यैश्चदस्युभिः । श्वभिः कुक्कुरैर्हतस्य खाद्यमृगादेर्यन्मांसं तच्छुचिरित्यन्वयः क्रव्याद्भिर्व्याघ्रादिभिः । मनुविष्णू नित्यभा-

स्यंशुचिस्त्रीणांशकुनिः फलपातने । प्रस्रवेचशुचिर्वत्सःश्वा-मृगग्रहणेशुचिः । स्त्रीणांस्वस्त्रीणाम् आस्यम्मुखम् प्रस्रवे गोस्तनपानेवत्सःशुचिरित्यन्वयः । यमः वालकैर्य्यत्परिक्रा-न्तंस्त्रीभिराचरितश्चयत् मसकैर्म्मक्षिकाभिश्चनिलीनंनोपहन्य-ते निलीनम् आक्रान्तम् । आसनंशयनंयानंस्त्रीमुखङ्कुतु पंक्षुरम् । नदूषयन्तिविद्वांसंयज्ञेषुचसमन्तथा । शयनं शय्या क्षुरं अन्यशिरोमुण्डकादि देवलः गोशकृच्छुष्कदेशस्थंश्मशा-नान्तद्धृतंशिवमिति । शातातपः रेणवःशुचयःसर्वेवायुनास-मुदीरिताः । अन्यत्ररासभाजाविश्वसमूहनिवासमाम् रेणवो-धूलयः रासभःगर्द्दभः अविर्म्मेषः स्वाकुक्कुरः समूहनी मार्जनी तथाच रासभादीनां षण्णां वातोद्धूतधूलयोऽशुचयः तद-न्याः शुचय इति भावः शङ्खः मुख वर्जश्चगौःशुद्धाःमार्ज्जारः क्रमणेशुचिः मनुः ऊर्ध्वंनाभेर्य्यानिखानितानिमेध्यानिसर्व-शः । यान्यधस्थान्यमेध्यानिदेहाच्चैवच्युतामलाः । खानि-छिद्राणि मेध्यानि पवित्राणि अधः नाभेरधः यमः वलात्का-रोपभुक्तावाचौरहस्तगतापिवा । स्वयम्विप्रतिपन्नावाअथवा-विप्रमादिता । अत्यन्तदूषितापिस्त्रीनपरित्यागमर्हति । या-ज्ञवल्क्यः । व्यभिचारादृतौशुद्धिर्गर्भेत्यागोविधीयते । गर्भ-भर्त्तृवधेतासांतथामहतिपातके । व्यभिचारोऽत्र समानजाति-कृतउत्तमजातिकृतमदमोहवलात्कारादिप्रमादजन्यः ऋतौर-जोयोगे गर्भेव्यभिचार जातगर्भे त्याग इति तासामित्यनेना-न्वयः स एवाह स्वच्छन्दगाचयानारीतस्यास्त्यागोविधीयते । नचैवंस्त्रीवधंकुर्य्यान्नचैवाङ्गविकर्त्तनम् । वसिष्ठः चतस्रस्तु

परित्याज्याः शिष्यगागुरुगाचयापतिघ्नीचविशेषेणजुङ्गितोपगताचय जुङ्गितोपगनाशूद्रान्त्यजादिगमनकर्त्री मरीचिः यत्–स्थानेषु यच्छौचन्धर्म्माचारश्चयादृशः तत्रतन्नावमन्येत धर्म्मस्तत्रैवतादृशः येषुदेशेषुयेदेवायेषुदेशेषुयेद्विजाः येषुस्थानेषुयत्तोयंयाचयत्रैवमृत्तिका॥

अथास्पृश्यस्पर्शशुद्धिः। मार्कण्डेयपुराणे अभोज्यसूतिकाषण्डमार्ज्जाराखुश्वकुक्कुटान् संस्पृश्यशुध्यतिस्नानादुदक्यायामशूकरौषण्डोनपुंसकः मार्जारोविडालः आखुः मूषकः एतच्च मार्ज्जारकर्मकस्पर्शे मार्ज्जारकर्तृकस्पर्शे तु नदोषः मार्ज्जारस्तु सदाशुचिरितिवचनात्॥

ब्रह्मपुराणे उच्छिष्टेनाथविप्रेणविप्रःस्पृष्टस्तुतादृशः उभौ स्नानंप्रकुरुतःसद्यएवापशुध्यति॥

तादृशः उच्छिष्टः। शातातपः रजकश्चर्म्म कृच्चैवव्याधजालोपजीविनौ। चेलनिर्णेजकश्चैवनटःशैलूषकस्तथा। मुखेभगस्तथाश्वाचवनितासर्ववर्णगा। चक्रीध्वजोवध्यघातीग्रामकुक्कुटशूकरौ। एभिर्य्यदङ्गसंस्पृष्टंशिरोवर्ज्जंद्विजातिषु। तोयेनक्षालनंकृत्वाआचान्तः शुचितामियात्। नटोवर्त्तकः शैलूषो नाटकाद्यभिनेतामुखे भगोमुखयोनिरिति प्रसिद्धः चक्री तैलिकः ध्वजी शौण्डिकः वध्यघाती चौरादिवधे नियुक्तः। अत्राजहत्स्वार्थलक्षणया शिरः पदेन नाभेरूर्ध्वमुपलक्ष्यते। तेन नाभेरधोरजकादिस्पर्शे प्रक्षालतमाचमनं च पर्यवसितं नाभेरूर्ध्वं श्वपाकादिस्पर्शे आह देवलः। श्वपाकं पतितंव्यङ्गमुन्मत्तंशवहारकम्। सूतिकांसूयिकांनारींरजसा–

स्यंशुचिस्त्रीणांशकुनिः फलपातने । प्रस्रवेचशुचिर्वत्सःश्वा-
मृगग्रहणेशुचिः । स्त्रीणांस्त्रस्त्रीणाम् आस्यम्मुखम् प्रस्रवे
गोस्तनपानेवत्सःशुचिरित्यन्वयः । यमः वालकैर्य्यत्परिक्रा-
न्तंस्त्रीभिराचरितञ्चयत् मसकैर्म्मक्षिकाभिश्चनिलीनंनोपहन्य-
ते निलीनम् आक्रान्तम् । आसनंशयनंयानंस्त्रीमुखङ्कुतु
पंक्षुरम् । नदूषयतिविद्वांसंयजेषुचसमन्तथा । शयनं शय्या
क्षुरं अन्यशिरोमुण्डकादि देवलः गोशकृच्छुष्कदेशस्थंश्मशा-
नानुद्धृतंशिवमिति । शातातपः रेणवःशुचयःसर्वेवायुनास-
मुदीरिताः । अन्यत्ररासभाजाविश्वसमूहनिवाससाम् रेणवो-
धूलयः रासभःगर्द्दभः अविर्म्मेषः श्वाकुक्कुरः समूहनी मार्जनी
तथाच रासभादीनां षण्णां वातोद्धृतधूलयोऽशुचयः तद-
न्याः शुचय इति भावः शङ्खः मुख वर्जञ्चगौःशुद्धाःमार्जारः
क्रमणेशुचिः मनुः ऊर्ध्वंनाभेर्य्यानिखानितानिमेध्यानिसर्व-
शः । यान्यधस्थान्यमेध्यानिदेहाच्चैवच्युतामलाः । खानि-
छिद्राणि मेध्यानि पवित्राणि अधः नाभेरधः यमः वलात्का-
रोपभुक्तावाचौरहस्तगतापिवा । स्वयम्विप्रतिपन्नावाअथवा-
विप्रमादिता । अत्यन्तदूषितापिस्त्रीनपरित्यागमर्हति । या-
ज्ञवल्क्यः । व्यभिचाराद्दतौशुद्धिर्गर्भेत्यागोविधीयते । गर्भ-
भर्त्तृवधेतासांतथामहतिपातके । व्यभिचारोऽत्र समानजाति-
कृतउत्तमजातिकृतमदमोहवलात्कारादिप्रमादजन्यः ऋतौर-
जोयोगे गर्भेव्यभिचार जातगर्भे त्याग इति तासामित्यनेना-
न्वयः स एवाह स्वच्छन्दगाच्चयानारीतस्यास्त्यागोविधीयते ।
नचैवंस्त्रीवधंकुर्य्यान्नचैवाङ्गविकर्त्तनम् । वसिष्ठः चतस्रस्तु

परित्याज्याः शिष्यगागुरुगाच्चयापतिष्णीच्चविशेषेणजुङ्गितोपगताच्चय जुङ्गितोपगनाशूद्रान्त्यजादिगमनकर्त्री मरीचिः यष्-स्थानेषु यच्छौचन्धर्म्माचारश्चयादृशः तत्रतन्नावमन्येत धर्म्मस्तत्रैवतादृशः येषुदेशेषुयेदेवायेषुदेशेषुयेद्विजाः येषुस्थानेषुयत्तोयंयाच्चयत्रैवमृत्तिका ॥

अथास्पृश्यस्पर्शशुद्धिः । मार्कण्डेयपुराणे अभोज्यसूतिकाषण्ढमार्ज्जाराखुश्वकुक्कुटान् संस्पृश्यशुध्यतिस्नानादुदक्यायाग्रामशूकरौषण्डोनपुंसकः मार्ज्जारोविडालः आखुः मूषकः एतच्च मार्ज्जारकर्मकस्पर्शे मार्ज्जारकर्तृकस्पर्शे तु नदोषः मार्ज्जारस्तु सदाशुचिरितिवचनात् ॥

ब्रह्मपुराणे उच्छिष्टेनाथविप्रेणविप्रःस्पृष्टस्तुतादृशः उभौस्नानंप्रकुरुतःसद्यएवापशुध्यति ॥

तादृशः उच्छिष्टः । शातातपः रजकश्चर्म्मकृच्चैवव्याधजालोपजीविनौ । चेलनिर्ण्णेजकश्चैवनटःशैलूषकस्तथा । मुखेभगस्तथाश्वाचवनितासर्ववर्णगा । चक्रीध्वजीवध्यघातीग्रामकुक्कुटशूकरौ । एभिर्य्यदङ्गसंस्पृष्टंशिरोवर्ज्जंद्विजातिषु । तोयेनक्षालनंकृत्वाआचान्तः शुचितामियात् । नटोवर्त्तकः शैलूषो नाटकाद्यभिनेतामुखे भगोमुखयोनिरिति प्रसिद्धः चक्री तैलिकः ध्वजी शौण्डिकः वध्यघातो चौरादिवधे नियुक्तः । अत्राजहत्स्वार्थलक्षणया शिरः पदेन नाभेरूर्ध्वमुपलक्ष्यते । तेन नाभेरधोरजकादिस्पर्शे प्रक्षालनमाचमनं च पर्यवसितं नाभेरूर्ध्वं श्वपाकादिस्पर्शे आह देवलः । श्वपाकं पतितंव्यङ्गमुन्मत्तंशवहारकम् । सूतिकांसूयिकांनारींरजसा-

त्त्वपरिप्सुताम् । श्वकुक्कुटवराहांश्चग्राम्यान्संस्पृश्यमानवः । सचैलंसशिरःस्नात्वातदानीमेवशुद्ध्यति मनुः अजीर्णेभ्युदिते-वान्तेश्मश्रुकर्मणिमैथुने दुस्वप्नेदुर्जनस्पर्शे स्नानमात्मम्विधीयते । तथाच पर्युषितवान्तेस्नानमित्यर्थः इति शुद्धिविवेकः । कालिकापुराणे स्पृष्ट्वारुद्रस्यनिर्म्माल्यंसवासा आप्लुतः शुचिः निर्म्माल्यमत्रापनीतमिति रुद्रधरः । वृहस्पतिः तीर्थेविवाहेयात्रायांसंग्रामेदेशविप्लवे नगरग्रामदाहेचस्पृष्टास्पृष्टिर्न्नदुष्यति ॥

अथ दाने तत्र मनुः तपःपरंकृतयुगेत्रेतायांज्ञानमुत्तमम् । द्वापरेयज्ञमेवाहुर्द्दानमेकंकलौयुगे । परितुष्टेनभावेन-पात्रमासाद्यशक्तितः । यत्किंचिदपिदातव्यंयाचतेनानसूयया । कृतश्रेष्टं कृतयुगेसत्ययुगेशक्तितोवित्तानुसारेण अनुसूयया परगुणसहिष्णुतया व्यासः यद्ददातिविशिष्टेभ्योयच्चाश्नासिदिनेदिने तत्ते वित्तमहंमन्येधूर्त्तंकस्यापिरक्षसि । आयासशतलब्धस्यप्राणेभ्योपिगरीयसः । एकैवगतिरर्थस्य दानमन्याविपत्तयः । गरीयसः । अधिकस्यअर्थस्य धनस्य ग्रासादर्द्धमपिग्रासमर्थिभ्यः किन्नदीयते । इच्छानुरूपीविभवःकदाकस्यभविष्यति । अर्थिभ्यः याचकेभ्यः । दातारंकृपणंमन्ये-मृतोप्यर्थन्नमुञ्चति । अदातापुरुषस्त्यागीसर्वंसन्तज्यगच्छति । गच्छतीत्यस्यपरलोकमितिशेषः । अनाहूतेषुयद्दानंयच्चदत्तमयाचितम् । भविष्यतियुगस्यान्तम् तस्यान्तोनभविष्यति । तस्य अयाचितदानस्य अदृष्टमश्नुतेदानंभुक्त्वाजानन्नदृश्यते । पुनरागमनन्नास्तिपुनर्द्दानमनर्थकम् । अदृष्टं कुत्रापि

स्मृतौ न दृष्टं अश्नुते विद्याशून्ये देवलः ॥ नाल्पत्वं वाबहुत्वं वादातस्याभ्युदयावहम्। श्रद्धाशक्तिश्चदानानां वृद्धिक्षयकरेहिते। पात्रेभ्योप्रदीयतेनित्यमनपेक्ष्यप्रयोजनम्। केवलंधर्म बुद्ध्यायधर्म इत्तंप्रचक्षते। प्रयोजनं पुण्यातिरिक्तम् ॥

अप्रतिग्राह्यानाह सुमन्तुःशौकबिकव्याधनिषादरजकवरुडचर्मकाराः अभोज्यान्ना अप्रतिग्राह्याः यमः नटनर्तकतक्षाणश्चर्मकारःसुवर्णकृत्। शौण्डिकाःकपिडकाःषण्ढाअभोज्यान्नाःप्रकीर्तिताः। गन्धर्वौलौहकारश्चसूचिकस्तन्तुवायकः। चक्रोपजीवीरजकः कितवस्तस्करस्तथा। ध्वजीमालोपजीवोचशूद्राध्यापकयाजकौ। कुलालश्चकुकर्माचवार्द्धुषश्चर्मविक्रयो। अप्रतिग्राह्याइत्येनैषां संवन्धः ॥

उत्तमादिदानान्याह अन्नं मधुदधित्राणंगोभूरत्नाश्वहस्तिनः। दानान्युत्तमदानानि उत्तमद्रव्यदानतः। त्राणं रक्षणम् विद्याच्छादनावासपरिभोगौषधानिच। दानानिमध्यमानोतिमध्यमद्रव्यदानतः। उपानत्प्रेंखयानानिछत्रपात्रासनानिच दीपकाष्ठफलादीनिचरमं बहुपार्षिकं चरमं अधमम् ब्रह्मवैवर्त्तप्रकृतिखंडे परकोयतडागेचतडागंयः करोतिवै उत्सृजेद्दैवदोषेण मूत्रकुण्डंप्रयातिसः। तत्रैव यत्फलंचतडागेनपङ्कोद्धारेणतत्फलं। पङ्कोद्धारेणवाप्याश्चवापीतुल्यफलंलभेत्। मत्स्यपुराणे वापीकूपतडागेषुदेवतायतनेषुच। पुनः संस्कारकर्त्ताचलंभतेमौक्तिकं फलं शातातपः अभिगम्यतुयद्दानंयच्चदानमयाचितं। विद्यतेसागरस्यान्तस्तस्यान्तोनैववियते। अभिगत्वेति सम्प्रदानसमीपं स्वयमेव गत्वेत्यर्थः

अन्यायाधिगताङ्कत्वासकलापृथिवीमपि । श्रद्धावर्जमपात्राय-नकिंश्चिद्गतिमाप्नुयात् । अधिगतामुपार्जितां । प्रदायमुष्टि-शाकं वाश्रद्धाभक्तिसमन्वितः महते पात्रभूतायसर्वाभ्युदयमा-प्नुयात् याज्ञवल्क्यः गोभूतिलहिरण्यादिपात्रे दातव्यमर्चि-तं । नापात्रे विदुषाकिंचिदात्मनः श्रेयइच्छता ॥

विद्यावन्तश्चयेविप्राःसुव्रताश्चतपस्विनः । सत्यसंय्यम-संयुक्ताध्यानयुक्ताजितेन्द्रियाः । दानपात्रा इति शेषः । स-म्वर्तः श्रोत्रियायदरिद्रायअर्थिनेचविशेषतः । यद्दानंदीयते-तस्मै तद्दानंशुभकारकम् ॥

श्रोत्रियलक्षणमाह यमः ओंकारपूर्विकातिस्रः सावित्रींय-श्चविन्दति । चरतिब्रह्मचर्य्यञ्च सवैश्रोत्रियउच्यते । अव्रताह्य-नधीयानायत्रभिक्षाचराद्विजाः । तंग्रामन्दण्डयेद्राजाचौरभ-क्तप्रदोहिसः । व्यासः सममब्राह्मणेदानंद्विगुणंब्राह्मणब्रुवे । अधीतेशतसाहस्रं अनन्तम्वेदपारगे । अब्राह्मणो राजसेव कादिः ॥

ब्राह्मणब्रुवमाह व्यासः गर्भाधानादिभिर्युक्तः तथोपन-यनेनच कर्म्मकृच्चनचाधीतेसभवेद्ब्राह्मणब्रुवः । वृहस्पतिः शू-द्रेसमगुणंदानंवैश्येचद्विगुणंस्मृतम् । क्षत्रियेत्रिगुणंप्राहुर्ब्रा-ह्मणेषड्गुणंस्मृतम् । श्रोत्रियेचैवसाहस्रमाचार्य्येद्विगुणन्त-तः । आत्मज्ञेशतशाहस्रमनन्तन्त्वग्निहोत्रिणे । अल्पविद्यस्या-ल्पंवहुविद्यस्यवहुदेयमितिचंडेश्वरः । दानेव्यासः मातापितृ-षुयद्दानंभ्रातृस्वसृसुतादिषु जायात्मजेषुयद्दानंसोऽनन्तःस्वर्गसं-क्रमः । असाधारणधनदानेफलमिदम् दक्षः दीनानाथविशि-

ष्टेभ्योदत्तंचसफलंभवेत्। दीनः क्षीणनिर्वाहोपायः अनाथः पोषकहीनः व्यासः दयामुद्दिश्ययद्दानमपात्रेभ्योपिदीयते। दीनांधकृपणेभ्यश्चतदानन्त्यायकल्प्यते। कृपणो विकलः विष्णुः नदानंयशसे दद्यान्नभयान्नोपकारिणे। ननृत्यगीतशीलेभ्योधर्मार्थं मितिनिश्चयः। उपकारिणे इति प्रत्युपकारेण धर्मार्थमित्यर्थः। शातातपः ब्राह्मणातिक्रमोनास्तिविप्रे वेदविवर्ज्जिते। ज्वलन्तमग्निमुत्सृज्यनहिभस्मनिहूयते। ब्राह्मणातिक्रम इति दोषायेति शेषः। यमः नप्रतिग्रहमर्हन्ति वृषलाध्यापकाद्विजाः। शूद्रस्याध्यापनाद्विप्रः पतत्येवनसंशयः। वृषलः शूद्रः। व्यासः नष्टशौचेव्रतभ्रष्टेविप्रे वेदविवर्ज्जिते। रोदित्यन्नंदीयमानंमयादुष्कर्मकिंकृतम्। हिरण्यविस्मरणेविस्मृततुल्यहिरण्यदानमाह। द्वैतपरिशिष्टे प्रमादतस्तुयन्नष्टन्तावन्मात्रंनियोजयेत् अन्यथास्तेयभागीस्याद्ब्रह्मन्यदत्तेविनाशिनि। उत्सृष्टाप्रतिपादितपर इतिरत्नाकरः॥

साम्प्रदायिकास्तु सर्वत्रसङ्कोचात्प्रायश्चित्तमाचरन्ति चौर्य्यादिनाकेनापिहृतसुवर्णेन हृततुल्यहिरण्यदानप्रमादत इत्यभिधानादित्यवगम्यते किन्तु विस्मरणादिना हिरण्यविनाशे विनष्टहिरण्यतुल्यहिरण्यदानम् तस्यदानेहिरण्यचौर्य्यदोषभागित्वम् तद्दानप्रकारस्तु ओंप्रमादनष्टहिरण्यतुल्यहिरण्यायनमः ३ इति देयहिरण्योपरिअक्षतान्विकीर्य्यकुशोपरि३ओं ब्राह्मणायनमः ३देयहिरण्यं सिक्त्वा कुशादिकमादाय ओं अद्यमत्प्रमादनष्टहिरण्यतुल्यपरिमाणं हिरण्याप्रदानहेतुकहिरण्यस्तेयजन्यपापानुत्पत्तिकाम इदं प्रमादनष्ट हिरण्यतु-

ल्यपरिमाणं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणायाहं-
न्ददे । तद्दशांशषोडशांशं वा दक्षिणान्दद्यात् हारीतः तस्मा-
दवोक्ष्यदद्यादालभ्यचेति अवोक्ष्य सिक्त्वा आलभ्य स्पृष्ट्वा
दद्यादित्यर्थः । स्मृतिः दद्यात्पूर्वमुखन्दानं गृह्णीयादुत्तरामुखः ।
नामगोत्रेसमुच्चार्य्यप्राङ्मुखोदेवकीर्तनात् उदङ्मुखायविप्रा-
यदत्वान्तेस्वस्तिवाचयेत् नन्दिपुराणे तस्मात्सर्वप्रयत्नेनदद्या-
त्कनकदक्षिणाम् । एतच्च पितृकार्य्यातिरिक्तं पितृकार्य्ये
तु रजतमेवदक्षिणेति बोध्यम् वृहस्पतिः कुटुम्बभक्तवसना-
द्देयं यदतिरिच्यते । मध्वाश्वादोविषंपश्चाद्दातुर्धर्म्मोन्यथाभवे-
त् । तथा च पोष्यपोषणयोग्यं धृत्वातदतिरिक्तमेव देयम् न
तु पोष्यपोषणयोग्यमपीति तात्पर्य्यम् । वृद्धशातातपः द्र-
व्येणान्यायलब्धेनयः करोत्यौर्द्ध्वदैहिकं नतत्फलमवाप्नोति-
तस्यार्थस्यदुरागमात् । और्द्ध्वदैहिकं श्राद्धादि अङ्गिराः वहु-
भ्योनप्रदीयंतेगोगृहंशयनस्त्रियः । विभक्तदक्षिणाह्येतादा-
तारंतारयन्तिहि । जीर्णोद्धारे यत्रत्वेकोश्वोगौर्बहुयोर्देयत्वेन
विहितस्तत्रमूल्यद्वारेणतद्विभागः संप्रदानेनैव कर्त्तव्यइतिम-
हार्णवेतु एकागौरनेकस्मैमूल्यद्वारेणैवदातव्यानतुस्वरूपेण ए-
काएकस्यदातव्यानबहुभ्यः कदाचन साहिविक्रियमापन्नादह-
त्यासप्तमंकुलमिति निषेधादिति यदुक्तं तद्विहितेतरवहुसं-
प्रदानकगोस्वरूपदानपरमिति सिद्धान्तवागीशः । अङ्गिराः
देवतानांगुरूणाञ्चमातापित्रोस्तथैवच । पुण्यन्देयम्प्रयत्नेनना-
पुण्यंदेशितंक्वचित् । अपुण्यं पापम् देशितङ्कथितम्नन्दिपुराणे
पापदःपापमाप्नोतिनरोलक्ष्यगुणं सदा पुण्यदः पुण्यमाप्नोति

शतशोथसहस्रशः यमः कन्याप्रदानेयज्ञेवाअन्यस्मिन्धर्म्मसङ्कटे। विघ्नमाचरतेयस्तुतमाहुर्ब्रह्मघातकम्। आसान्दत्वोह्यदातारन्दा नकालेनिषेधकम्। दत्वासन्तप्यतेयस्तुतमाहुर्ब्रह्मघातकम्। दानकाले इत्युपलक्षणम् तेन तत्पूर्वमपिदानप्रतिरोधकवाक्यादिकथनेपि दोष एव॥

आदित्यपुराणे किङ्करिष्यत्यसौमूढो गृह्णन्नुभयतोमुखीम् सहस्रं वारुणाः पाशाः क्षुरधारासिसंयुताः उभयतो मुखी निःसृतवत्समुखमात्रा॥

एकादशाहे शय्यादानप्रकरणे गृहीतायांतुतस्यांसपुनः संस्कारमर्हति वेदेषुचपुराणेषुशय्यासर्वत्रगर्हिता तस्यां शय्यायां पुनः संस्कारं पुनरुपनयनम्॥

षोडशमहादानान्याह आद्यन्तुसर्वदानानान्तुलापुरुषसञ्ज्ञितं हिरण्यगर्भदानञ्चब्रह्माण्डं तदनन्तरम्। कल्पपादपदानञ्चगोसहस्रञ्चपञ्चमम्। हिरण्यकामधेनुश्चहिरण्याश्वस्तथैवहि। हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा। पञ्चलाङ्गलकंतद्वद्धरादानन्तथैवच द्वादशंविश्वचक्रञ्चततःकल्पलतात्मकम्। सप्तसागरदानञ्चरत्नधेनुस्तथैवच महाभूतघटस्तद्वत्षोडशाःपरिकीर्त्तिताः॥

अथदानदेशानाह तीर्थेचायतनेगोष्ठेकूपारामसरस्सुच गृहेवापिवनेवापितडागेरुचिरेतथा। महादानानिदेयानिसंसारभयभोरुणा। अनित्यं जीवनंयस्मादृसुचातीवचंचलं केशेष्विवगृहीतस्तुमृत्युनाधर्म्ममाचरेत्। तडागे इत्यादौ सामीप्ये सप्तमी तेन तडागादिसमीपइत्यर्थः वटेगावःसुशेरत इतिवत्॥

अयनेविषुवेपुण्येऽव्यतीपातेदिनक्षये । युगादौवोपरागेच्च-
तथामन्वन्तरादिषु संक्रान्तौवैधृतिदिनेचतुर्द्दश्यष्टमीषुच्च शित-
पञ्चदशोपर्वद्वादशोष्वष्टकासुच्च यज्ञात्मकेविवाहेषुदुःस्वप्नाद्-
भुतदर्शने द्रव्यब्राह्मणलाभेच्चश्रद्धावायत्रजायते अत्र गुरुशुक्र-
बाल्यवार्द्धकास्तमयसिंहादित्यगुर्वादित्यपौषादिमासचतुष्टया-
न्यतमैकद्वित्रितद धिकान्यतमदिनवृष्ट्युत्तरैकद्वित्रिसप्तान्यत-
मादि निषिद्धसमयादन्यस्मिन्निति दानरत्नाकरः । श्रवणा-
श्विधनिष्ठार्द्रानागदैवतमस्तके चन्द्रमारविवारेणऽव्यतीपातः
षडुच्यते ॥

अथ युगादिः ब्रह्मपुराणे वैशाखेशुक्लपक्षेतुतृतीयायांकृतं-
युगम् कार्तिकेशुक्लपक्षेचत्रेतातुनवमेऽहनि अथ भाद्रपदेकृष्ण
चतुर्द्दश्यान्तुद्वापरम् माघेतुपौर्णमास्यान्तुघोरंकलियुगन्तथा ।
युगारम्भास्तुतिथयोयुगाद्यास्तेनकीर्त्तिताः ॥

अथ मन्वन्तराण्याह ॥ मत्स्यपुराणे अश्वयुक्शुक्लनव-
मीद्वादशीकार्त्तिकेतथा । आषाढस्यापिदशमीमाघमासस्यस-
प्तमी श्रावणस्याष्टमीकृष्णतथाषाढीचपूर्णिमा कार्त्तिकीफाल्गु-
नीचैत्रीज्यैष्ठीपञ्चदशीतथा । मन्वन्तरादयस्त्वेतादत्तस्याक्षय-
कारकाः ॥

भूमिदाने याबालः महापातकयुक्तोवायुक्तोवासर्वपातकैः
दशहस्तांमहींदत्वामुच्यतेसर्वकिल्विषैः । यत्किञ्चित्कुरुतेपापं
पुरुषोवृत्तिकर्षितः । अपिगोचर्ममात्रेणभूमिदानेनशुद्ध्यति ॥

अथ गोचर्मप्रमाणमाह । दशहस्तेनदण्डेनत्रिंशद्दण्डैस्त-
थायतम् । दशतान्येवविस्तारोब्राह्मं गोचर्मलक्षणम् ।

बृहस्पतिः षष्टिवर्षसहस्राणिस्वर्गेवसतिभूमिदः । आक्षेप्ताचानुमन्ताचतान्येवनरकंव्रजेत् । आक्षेप्ताहरणकर्त्ता तान्येव षष्टिवर्षसहस्राण्येव संख्यापरिमाणे मात्स्ये तडागानांसहस्रेणअश्वमेधशतेनच गवाङ्कोटिप्रदानेनभूमिहर्त्तानशुध्यति । स्वदत्ताम्परदत्तांचयोहरे द्वैवसुन्धराम् । षष्टिवर्षसहस्राणिविष्ठायाञ्जायतेकृमिः । भूमिंयःप्रतिगृह्णातियश्चभूमिंप्रयच्छति । उभौतौपुण्यकर्माणौनियतंस्वर्गगामिनौ । दातादानंस्मरेन्नैवप्रतिग्राहीनयाचते । उभौतौनरकंयातीयावच्चन्द्राकंमेदिनी ॥

ब्रह्माण्डे । यद्गोदानंतपोजप्यंश्राद्धंचसुरपूजनम् । गंगायांयत्कृतंसर्वं कोटिकोटिगुणम्भवेत् ॥

भविष्ये यश्चाक्षय्यतृतीयायाङ्गङ्गातीरेददातिवै । घृतधेनुंविधानेनतस्यपुण्यफलंश्रृणु । कल्पकोटिसहस्राणिकल्पकोटिशतानिच । सहस्रादित्यसंकाशःसर्वकामसमन्वितः । तथैवगोप्रदानश्चविधिनाकुरुतेतुयः । गोलोमसंख्ययातावत्कल्पान्यर्बुदसङ्ख्यया । गोलोकेशिवलोकेवाकामधेनुप्रजान्वितः । भुञ्जानःसर्वकामांस्तुदिव्यान्नानाविधान्बहून् गङ्गायांनिवर्त्तनद्वयभूमिदानमभिधाय तीर्थचिन्तामणौ । ब्रह्माण्डे तद्भूमिपरमाणूनांसंख्यायायुतसंख्यया सोमेन्द्रब्रह्मलोकेषु विष्णुलोके तथैवच शिवलोकेतथाश्रीमान्भोगंभुङ्क्ते तथाविधम् ॥

निवर्त्तनलक्षणमाह । मात्स्ये । सप्तहस्तेनदण्डेनविंशद्दण्डान्निवर्त्तनम् । त्रिभागहीनङ्गोचर्ममानमाहप्रजापतिः ॥

तथा ग्रामंगङ्गातटेयोसौविप्रेभ्यस्सम्प्रयच्छति ब्रह्मविष्णुशिवेभ्यश्चदुर्गायैभास्करायच सर्वदानेषुयत्पुण्यंसर्वयज्ञेषुयत्फ-

लम् सर्वतीर्थेषुयत्पुण्यंसर्वव्रततपस्सुच सहस्रगुणितन्तत्रफलं-
स्याद्ग्रामदानतः । तत्रेति गङ्गायामित्यर्थः । तथा । यावत्तु-
ग्रामभूमेस्तैंपरमाणुषुसंख्यया भोगान्भुक्त्वातथालोकेजायते-
योगिनांकुले अणिमादिगुणैर्युक्तःस्वयम्भोगोभवत्यपि । देहा-
न्तेनिर्मलेनित्येपरेब्रह्मणिलीयते तथा । गोभूहिरण्यदानेनभ-
क्त्यागङ्गातटेसकृत् नरोनजायतेभूयःसंसारेदुःखसङ्कटे । दी-
र्घायुष्यंचवासोभिरन्नदानेनसम्पदः ॥

अथ दशधेनूनाह । मात्स्ये प्रथमागुडधेनुःस्यात्घृतधेनु-
स्तथापरा तिलधेनुस्तृतीयातुचतुर्थीजलसंज्ञिका । क्षीरधेनुश्च-
विख्यातामधुधेनुस्तथापरा । सप्तमोसक्र राधेनुर्दधिधेनुस्तथा-
ष्टमो रसधेनुश्चनवमोदसमीस्यात्स्वरूपतः । स्वरूपधेनुमन्यत्र-
केचिदिच्छन्तिमानवाः ॥

गुडधेन्वादौ गुडादिप्रमाणमाह मात्स्ये उत्तमागुडधेनुः-
स्यात्सदाभारचतुष्टयम् वत्सम्भारेणकुर्वीतभाराभ्यांमध्यमा-
स्मृता । अर्द्धभारेणवत्सःस्यात्कपिलाभारकेनतु । चतुर्थांशे-
नवत्सःस्याद्गृहवित्तानुसारतः ॥

मुख्यकल्पशक्तस्य गौणकल्पकरणे । दोषमाह । कात्या-
यनः । प्रभुःप्रथमकल्पस्ययोनुकल्पेनवर्त्तते । नसाम्परायि-
कंतस्यदुर्मतेर्विद्यतेफलम् सांपरायिकंपारलौकिकम् एतदेवघृ-
तादिनवधेनुघृतादिप्रमाणमपि । विधानमेतद्धेनूनांसर्वासा-
मिहपठ्यते इति । सामान्येनातिदेशात् ॥

तत्र दानप्रकारः गोमयोपलिप्तायां भूमौ कुशानास्तीर्य्य
तत्र प्राग्ग्रीवं चतुर्हस्तं कृष्णाजिनं धेन्वर्थं पातयित्वा तत्समी-

पैलघुकृष्णाजिनं प्राग्ग्रीवमेववत्सार्थंधृत्वातदुपरिशक्त्यनुसारे-
णभारचतुष्टयादिनाघृतादिनाघटेषुस्थापितेनधेनुं शक्त्यनुसारे-
णैकभारादिनाघृतादिनाघटेस्थापितेन चवत्सं परिकल्प्योभा-
वपिशक्लु वस्त्रेण वेष्टितौशुक्तिमयकर्णौ इक्षुमयपादचतुष्टयौ
सुवर्णशृङ्गी रूप्यखुरौ सुरभिद्रव्यनिर्मितघ्राणौ धेनुवत्सौनि-
र्मायाक्षतपुष्पाभ्यां ओं सोपकरणसवत्सधेनवेनमः ३ ओंब्रा-
ह्मणायनमः ३ ओंइमांसोपकरणांसवत्सांघृतधेनुंददातीतिद्वि-
जकरेजलं दत्त्वा ददस्वेति तेनोक्ते धेनुं संप्रोक्ष्य ओंयालक्ष्मी-
रित्यादिपंचश्लोकं पठित्वा ओंअद्याक्षयतृतीयायांकल्पकोटि-
सहस्रवहुकल्पकोटिशतावच्छिन्नहेमरत्नमयहंसभूषित विमा-
नाधिकरणकस्वकोयपितृगणसहितसहस्रादित्यसङ्काशसर्वकाम
समन्वितस्वकोयरुद्रलोकसहितत्वतदुत्तरं गङ्गाधिकरणान्वित-
विप्रत्वभवनान्तकालिकब्रह्मविष्णुभवनानन्तरमोक्षप्राप्तिकाम
इमां गोमयोपलिप्तास्तृतकुशास्थितां घृतधेनुं सवत्सां तत्तदु-
पकरणयुक्तामित्यादि। ततः सुवर्णदक्षिणां दद्यात्। एवं
गुडधेन्वादावपोति श्राद्धचिन्तामणौ गुडधेन्वादीनां प्रकारः
अथोभयमुखोगोदाने मात्स्ये रुक्मशृङ्गींरौप्यखुरांमुक्तालाङ्-
गूलभूषिताम्। कांस्योपदोहनांराजन्सवत्सांद्विजपुङ्गवे। प्रस
यमानांयोदद्याद्धेनुं द्रविणसंयुताम्। यावद्वत्सोयोनिगतोया
वद्गर्भन्नमुञ्चति। तावद्गौःपृथीवीज्ञेयासशैलवनकानना। चतु
र्णाभवेद्दत्तापृथिवीनात्रसंशयः। यावन्तिधेनुरोमा। णिवत्सस्य
चनराधिप तावत्संख्ययुगानेवदेवलोकेमहीयते। पितृन्पिता
महांश्चैवतथैवप्रपितामहान्। उद्धरिष्यत्यसंदेहोनरकाद्भूरि

दक्षिण इत्यादि द्रविणसंयुक्तांदक्षिणाद्रव्यसंयुक्ताम् भूरिदक्षिणइत्यग्रेऽभिधानात् इति लक्ष्मीधरः सोपकरणप्रसूयमानोभयमुखोगोपूजादि विधाय ओंअद्यसप्तसमुद्रसशैलवनकाननचतुरर्णपृथिवीदानजन्यसमफलैतद्धेनु वत्सरोमसमसंख्ययुग गणावच्छिन्नदेवलोकसहितस्वपितृपितामह प्रपितामहनरकोद्धरणघृतक्षीरवहकुल्पाकदधिपायसकर्दमकदेशाधिकरणकेप्सितकामदइत्यात्मगोलोकसुलभत्वब्रह्मलोकसुप्रापत्वाजस्रचन्द्रवत्कसुतप्तजाम्बूनदतुल्यवर्णमहानितम्वस्तनवृत्तमध्यनलिनाभनेत्रा अनेकदेशाधिकरणकेप्सितस्त्रीसेव्यमानत्वकाम इमां रुक्मशृङ्गींरौप्यखुरां मुक्तालाङ्गूलभूषितां कांस्योपदोहनां सवत्सां प्रसूयमानामुभयतो मुखीं गां रुद्रदैवतां इत्यादि । ततो दक्षिणां दत्वा पुच्छग्रहणं कारयित्वाकामस्तुतिं पाठयेत् इतिदानवाक्यावली ॥

अथद्रव्यदैवतानि विष्णुधर्म्मोत्तरे । अभयंसर्वदैवत्यंभूमिर्वैविष्णुदैवता।कन्यादासस्तथादासीप्राजापत्याःप्रकीर्त्तिताः। प्राजापत्योगजःप्रोक्तस्तुरगोयमदैवतः। तथाचैकशफंसर्वंकथितंयमदैवतम्। महिषश्चतथायाम्यउष्ट्रोनैर्ऋतकस्तथा। रौद्रंधेनुर्विनिर्द्दिष्टा छागआग्नेयउच्यते। मेषस्तुवारुणंविद्याद्वराहोवैष्णवः स्मृतः । आरण्याः पशवःसर्वेकथितावायुदेवताः। जलाशयानिसर्वाणिविविधानिकमण्डलुः। कुम्भंचकरकञ्चैववारुणा निविनिर्द्दिशेत्। समुद्रजानिरत्नानिसमुद्राणितथैवच। आग्नेयंकाञ्चनंप्रोक्तंसर्वंलौहानिवाप्यथ। प्राजापत्यानिशस्यानिपक्वान्नमपिचद्विजाः । ज्ञेयानिसर्वगन्धानिगान्धर्वाणि विचक्षणैः। वार्हस्पत्यंस्मृतंवासःसौमान्यथरसानिच।

पक्षिणश्चतथासर्वेवायव्याःपरिकीर्त्तिताः। विद्यान्नाह्मीविनिर्द्दि-ष्टाविद्योपस्करणानिच । सारस्वतानिज्ञेयानिपुस्तकाद्यानि-पण्डितैः । सर्वेषांशिल्पभाण्डानांविश्वकर्म्मातुदैवतम् । द्रुमाणामथपुष्पाणांशाखानांहरितैस्सह । फलानामपिसर्वेषां तथाज्ञेयोवनस्पतिः। मत्स्यमांसंविनिर्द्दिष्टंप्राजापत्यंतथैवच। छत्रंकृष्णाजिनंशय्यारथमासनमेवच । उपानहौतथायानंयच्चा न्यत्प्राणवर्जितम् । उत्तानाङ्गिरसंत्वेतत्प्रतिगृह्णीतमानवः । पर्ज्जन्यायतथाशोरंशस्त्रबर्म्मध्वजादिकम्। रणोपाकरणंसर्वं कथितं शक्रदैवतं। गृहंतुसर्वदैवत्यंयदनुक्तंद्विजोत्तमः । तत् ज्ञेयंविष्णुदैवत्यंसर्वंवाविष्णुदैवतम् । द्विजोत्तमा इति संबो धनम् ॥

अथ गवादिमूल्यम्। छन्दोगपरिशिष्टे द्वात्रिंशत्पणिका-गावश्चतुःकार्षापणोवरः । वृषेषट्कार्षापणकश्चाष्टावनडुहि स्मृतः। दशकार्षापणंधेनोरश्वेपञ्चदशैवतु। हिरण्येकार्षाप-णकःपणानवतथाधिका वस्त्रेकार्षापणःछागेऽष्टौपणाद्वादशा-विके। वृषल्यामथपंचाशन्मूल्यंकार्षापणाःस्मृताः। निष्केपं-चाशदेवस्याद्गजेपंचशतानिवै। पंचकार्षापणःप्रोक्तादोलायां-षड्रथेतथा गृहेष्टकार्षापणकस्ताम्रे कार्षापणःस्मृतः। कार्षाप-णाःषोडशतेइतिमुल्यप्रकल्पना । अधिकंप्रकल्पयेन्मुल्यंनुनं-वित्तानुसारतः। पंचकार्षापणादासीदासस्यात्पञ्चमाषकः । महिषोवृषवदिति ॥

अथ संस्काराः गौतमः गर्भाधानंपुंसवनंसीमन्तोन्नयनं-तथा। जातकर्म्म नामकरणमन्नप्राशनंचूडोपनयनंचत्वारिदे-

वव्रतानि । स्नानंसहधर्म्मचारिणीसंयोगःसहधर्मचारिणीसंयो-
गोविवाहः सुमन्तुः ब्राह्मणक्षत्रियविशांवृत्तिःगर्भाधानसीम-
न्तोन्नयनजातकर्म्मनामकरणनिःक्रमणान्नप्राशनचूडोपनयन-
व्रताचरणाध्ययनसमावर्त्तनविवाह श्लोष्यन्तीयज्ञदानादिश्लो-
ष्यन्तीसुखप्रसवार्थकर्म्म प्रसवशूलहरम् । याज्ञवल्क्यः गर्भा-
धानमृतौपुंसःसवनं स्पन्दनात्पुरा । पुंसः सवनं पुंसवनं
स्पन्दनात् गर्भचलनात् वैजवापः सप्तम मासि प्रथमे वा गर्भे
सीमन्तोन्नयनम् स्मृतिः तस्मान्नाधिकारोस्यनवेदनस्मृतावि-
ति । विवाहमात्रसंस्कारंशूद्रोपिलभतांस्वयम् । अस्यशूद्रस्य-
मात्रपदंविशेषविहितविवाहान्यसंस्कारव्यवच्छेदकम् । विष्णु-
पुराणे सचेलस्यापितुःस्नानंजातेपुत्रेविधीयते । जातकर्म्मततः
कुर्य्याच्छ्राद्धमाभ्युदयेचयत् । गौतमः जननाद्दशरात्रेव्युष्टेश-
तरात्रेसम्वत्सरेवानामकरणं व्युष्टेव्यतीतेदशरात्रंस्वस्वाशौचा-
न्तिमदिनपरम् अशौचव्यपगमे नामधेयमिति विष्णुवचनात्
गृह्यपरिशिष्टेद्व्यक्षरंचतुरक्षरं वाघोषवदाभ्यन्तस्थमध्यंदीर्घाभि-
निष्ठानंकृतंकुर्य्यान्नतद्धितं वर्गाणां तृतीयचतुर्थपंचमायरल-
वाहकारश्चघोषवन्तस्तेनाम्न आदौ देयाःयरलवा अन्तस्थास्ते
नाम्नो मध्ये कृतं कृदन्तं । शङ्खलिखितौ कुलदेवतानक्षत्रा-
दिसंवद्धमिति नामकुर्य्यादिति शेषः कुलसंवद्धं वासिष्ठ इति
देवसंबद्धं केशव इनिनक्षत्रसम्बद्धंचैत्र इति । यमः ततोन्न-
प्राशनंमासिषष्ठेकुर्य्याद्यथाविधि । देवलः गर्भाष्टमेउपनयना-
र्हीभवति इति ब्राह्मणस्यमुख्यकालः गौणस्तु पंचदशवर्षपर्य्य-
न्तः तथाहि याज्ञवल्क्यः आषोडशात्द्वाविंशाच्चतुर्विंशाच्च-

त्सरात् । ब्रह्मक्षत्रविशांकालऔपनायनिकःस्मृतिः । अतऊर्ध्वंपतन्त्येतेसर्वधर्म्मंवहिःकृताः । आशोडशादितिपंचदशवर्षपर्य्यन्तमित्यर्थः । एवमाद्वाविंशादित्यादावपि । तथा च ब्राह्मणादित्रयाणां क्रमेण पंचदशैकविंशतित्रयोविंशतिवर्षमुपनयनस्य गौणः कालः । अत ऊर्ध्वमुपनयनंव्रात्यप्रायश्चित्तंकृत्वा कर्तव्यम् । क्षत्रियवैश्ययोर्मुख्योपनयनकालमाह याज्ञवल्क्यः राज्ञामेकादशेसैकेविशामेकेयथाकुलम् । सैकेएकसहिते तथाच राज्ञां द्वादशवर्षो मुख्यः कालः । मनुः असपिण्डाचयामातुरसगोत्राचयापितुः । सान्याय्याद्विजजातीनांदारकर्मणिमैथुने । दारकर्मणिविवाहे मैथुनेरतौ पंचमात्सप्तमादूर्ध्वम्मातृतः पितृतस्तथा । सपिण्डतानिवर्तेतसर्ववर्णेष्वयंविधिरिति याज्ञवल्क्यः पितृतःसप्तमींवर्ज्जयेत्मातृतःपंचमीन्त्यजेत् । विवाह इति शेषः । व्यहारात्पितृतः सप्तम्यपिविवाह्याव्यवहारे वलवत्त्वस्य प्रागुक्तत्वात् सुमन्तुः सर्वाःपितृपत्न्योमातरस्तद्भ्रातरो मातुलास्तद्दुहितरोभगिन्यस्तदपत्यानिभागिनेयानि ताश्च न परिणेतव्याः ताःपरिणीताः शङ्करकारिण्यस्तथाध्यापयितुरेतदेव एतेन सपत्नीमातुर्भ्रातृपुत्रीतत्पुत्रो न विवाह्ये ति पर्य्यवसितम् । सपत्नीमातुर्भगिनीपरिणयने न दोषः । प्रापकाभावात् ॥

अथ कन्यादानाधिकारिणआह ॥ कात्यायनः । स्वयमेवौरसींदद्यात्पित्रभावेस्वबान्धवाः । दीर्घप्रवासशक्तेषुपोगण्डेष्वबन्धुषु ॥ मातातुसमयेदद्यादौरसीमपिकन्यकाम् । बान्धवाः पितामहपितृव्यभ्रात्रादयः । दीर्घप्रवासशक्तेषु अति-

दूरविदेशस्थितेषु पोगण्डेषु व्यवहारासमर्थेषु । स्मृतिः पितापितामहोभ्रातासकुल्योजननीतथा । एतेकन्याप्रदातारःपूर्वाभावेपरःपर इति। राजमार्त्तण्डे षोडशाब्देगर्भेपराष्टमेमासिप्रसूतिका। उभयोरपिमरणंस्यात्सत्याचार्य्यः प्रभाषते ॥ अब्देपंचदशेगर्भेप्रसवःषोडशेपिवा दम्पत्योश्चैवनाशःस्यादेकस्मिन्नेकनाशनम् । षोडशाब्दगतानारीभवेद्गर्भसमन्विता । अग्रतोम्रियतेमातापश्चात्पुत्रोविनश्यति ॥ अथतच्छान्तिःदद्याद्गर्भवतींछागींवस्त्रालङ्कारभूषिताम् । पुंसवेनविधानेनसंक्रमेशिवसन्निधौ ॥ उपनयनविवाहादिसंस्कारेआभ्युदयिकश्राद्धमावश्यकम् तथाहि स्मृतिः नानिष्ट्वातुपितॄन्श्राद्धे कर्मवैदिकमाचरेदिति तच्च पित्रातदन्येनवा कर्त्तव्यमिति तथाहि पिताकुर्य्यात्तदन्योवातस्याभावेतुतत्क्रमादिति । तत्र क्रममाह कात्यायनः । स्वपितृभ्यःपितादद्यात्सुतसंस्कारकर्मणि । पिण्डानोद्वाहनात्तेषान्तस्याभावेतुतत्क्रमादिति । पिण्डानितिपिण्डपदंश्राद्धोपलक्षकम् आभ्युदयिके पिण्डरहितत्वात्पिण्डान् आउद्वाहनात् इत्यत्र गुणे कृते पिण्डानोद्वाहनादिति सिद्ध्यति उद्वाहनं विवाहः आविवाहाद्विवाह पर्य्यन्तमितियावत् तस्याभावे माणवकपितुरभावे । अभावोत्र विनाशरूपः तत्क्रमात् माणवकादिसंस्कार्य्यक्रमादित्यर्थः तथाच पितृकर्तृके आभ्युदयिके जीवति पितरि तत्प्रतिनिधिकृते वा संस्कार्य्यपितामह्यादितिसृणांपितामहादित्रयाणां पितृमातामहादित्रयाणामेवश्राद्धम् । संस्कार्य्यं पितरि मृते तु आभ्युदयिके संस्कार्य्य माणवकादिमात्रादीनां पित्रादीनां संस्कार्य्यमाणवकादिमाता-

महादीनां श्राद्धमिति पर्य्यवसितम् तत्रापि यो यो जीवति तं तं परित्यज्यतदूर्ध्वन्तेन श्राद्धं कर्तव्यम्। अत्र तस्याभावे संस्कार्य्यं पितुरभावे न तु तस्मिन्प्रमोतेतद्वदेवकार्य्यमिति द्वैतपरिशिष्टे। तस्मिन्प्रमीते पितरि प्रमोते तद्वदेवपितृवदेव अस्यनत्विति पूर्वेणान्वयःस्मृतिः। मातृश्राद्धंतुपूर्वंस्यात्पितृणान्तदनन्तरम्। ततोमातामहादीनां वृद्धौश्राद्धत्रयंस्मृतं। मातृश्राद्धं मात्रादित्रयश्राद्धं एवमग्रेपि। तथा च प्रथमं मातृपितामहीप्रपितमहीनां ततः पित्रादित्रयाणां ततो मातामहादित्रयाणामिति क्रमेण श्राद्धं कर्तव्यमिति भावः। अर्घेगन्धादिदानेचअवनेजनपिण्डयोः। प्रत्यवनेजनेसूत्रेयेचात्रंष्वप्सुयोजयेदिति वचनात्सामगानां ये चात्रेति पाठः। श्राद्धे विहितः स चाभ्युदयिकादौनास्ति। तथाहि स्मृतिः प्रेतश्राद्धेस्त्रियःश्राद्धेवृद्धिश्राद्धेतथैवच। तथास्त्रीकर्तृकेश्राद्धेयेचात्रंनाभियोजयेत् इति प्रेतश्राद्धेप्रेतोद्देश्यक एकादशाहादिश्राद्धे वृद्धिश्राद्धे अभ्युदयिके॥ अथ बालानां प्राथमिककेशकर्त्तनम्। राजमार्तण्डे जन्मादौसममासिपुत्रविषयेस्त्रीणान्तु तद्वारयकार्य्यंचादिमकेशखण्डनमिदं सूर्य्ये च सौम्बायने। आदित्यद्वयदस्रपौष्णशशिभृद्विष्णुत्रयार्कत्रये पूर्वान्हेशुभवासरेजयतिथौह्यष्टम्यमावर्जितेति। आदित्यद्वये पुनर्वसूपुष्ये दस्र आश्विनीपौष्णं रेवती शशभृन्मृगशिरा विष्णुत्रयं श्रवणादित्रयम् अर्कत्रयं पूर्वफल्गुन्यादित्रयम् अमाअमावास्यायुग्मवर्षत्याग इति समाचारात्॥

अथ स्त्रीत्वभावः। तत्रमनुः अक्षयन्त्वाः स्त्रियःकार्य्याः पुरुषैः

स्वैर्द्दिवानिशं । विषयेच्चसंशकाः संस्थाप्यात्मानमात्मना । संशक्ताःप्रशक्ताभवन्त्यः । नारदःस्वातन्त्र्याद्धिप्रणश्यन्तिकुलेजाताअपिस्त्रियः । अस्वातन्त्र्यंयतस्तासाम्प्रजापतिरकल्पयत् । स्वातन्त्र्यंस्वेच्छयागमनाचारादिकर्तृत्वं कुलेसत्कुले मनुः सूक्ष्मेभ्योपिप्रसङ्गेभ्यः स्त्रियौरक्ष्याः प्रयत्नतः । द्वयोर्हिकुलयोः शोकमावहेयुररक्षिताः । इमंहिसर्ववर्णानांपश्यन्तोधर्म्ममुत्तमम् यतन्तेरक्षितुंभार्य्यांभर्त्तारोदुर्वलाअपि । स्वाम्प्रसूतिंचरित्रंच-कुलमात्मानमेवच । स्वधर्म्मेणप्रयत्नेनजायांरक्षन्हिरक्षति । स्थानंनास्तिक्षणंनास्तिनास्तिप्रार्थयितानरः । तेननारदनारीणांसतीत्वमुपजायते । याज्ञवल्क्यः रक्षेत्कन्यांपिताविन्नांपतिःपुत्राश्चवार्द्धके । अभावेज्ञातयस्तेषांनस्वातन्त्र्यंक्वचित्स्त्रियः । कन्यांकुमारींविन्नांविवाहितांतेषांपुत्रादीनां अभावेइत्यनेनास्यसम्बन्धः । हारीतःजीवितेजारजःकुण्डोमृतेभर्त्तरिगोलकः । तस्माद्रेतोपधानाच्चजायांरक्षेत्प्रयत्नतः । जीवितेइत्यस्यभर्त्तरीत्यग्रिमेणान्वयः । जारःपतिभिन्नः जारस्तूपपतिस्समावित्यमरः मृतेभर्त्तरीति जारजइतिपुर्वेणान्वयः रेतोपधानात् । बृहस्पतिः अप्रयच्छन्पिताकालेपतिश्चानुपयन्तृतौ । पुत्रश्चाभक्तदोमातुर्गर्ह्यदण्ड्याश्चधर्म्मतः । अप्रयच्छनकन्यादानमकुर्वन कालेदशवर्षाभ्यन्तरेअनुपयनः मैथुनमकुर्बन् ऋतौ रजोयोगानन्तरंचतुर्थादिदिनेअभक्तदः भरणमकुर्बन् । नैतारूपंप्रतीछन्तेनैतावयसिसंस्थितिम् । नरूपंरूपवन्तंवापुंसासंभ्चापिभुञ्जते । रामायणे नैवाङ्गनानान्दयितोनापिद्वेष्योस्तिकश्चन । सर्वमेवाबलंवन्तेलतागदनजाइव । अङ्गनानां स्त्रीणां

दयितः प्रियः त थाच्चवयोरूपाद्यपेक्षानास्त्येवस्त्रियाः। किन्तुपुरुषमात्रस्यापेक्षेतिभावः। दक्षः साशङ्कावालभावेतु-यौवनेभिमुखीभवेत्। तृणवन्मन्यतेनारीवृद्धभावेस्वकम्पतिं। वृद्धभावेवार्द्धकावस्थायाम् स्वकाम्येवर्त्तमानासास्नेहान्नचनि-वारिता अपथ्याभिभवेत्पश्चाद्यथाठ्याधिरूपेक्षितः स्वकाम्ये स्वेछायां सास्त्री अपथ्यादुःखदायिनी तथाच प्रथमंस्वछन्नचारि-णीचेत्तदापश्चाद्दुःखदायिनीभवतीतितात्पर्य्यम्। महाभारते कुलीनारूपवत्यश्चनाथवत्यश्चयोषितः। मर्य्यादासुनतिष्ठन्ति-दोषश्चस्त्रीषुनारद। नारदेतिसम्बोधनम्। अनर्थित्वान्मनु-ष्याणां भयात्परिजनस्यच। मर्य्यादायाममर्य्यादास्त्रियस्तिष्ठ-न्तिभर्तृषु। अलाभात्पुरुषाणांचभयात्परिजनस्यच। वधव-न्धभयान्नैवस्वयंगुप्त्याभवन्तिताः। तथाच भयादिभिरेवर-क्षिता भवन्तिनस्वभावतइतिभावः। नाग्निस्तृप्यतिकाष्ठानां-नापगानांमहोदधिः। नान्तकस्सर्वभूतानांनपुंसांवामलोचना। अपगानद्यः अन्तकोयमः वामलोचनास्त्री। मनुः एवंस्वभा-वंज्ञात्वासाम्प्रजापतिनिसर्गजम्। परमंयत्नमातिष्ठेत्पुरुषोर-क्षणंप्रति। स्त्रियाइतिशेषः। तस्मात्स्त्री अस्वतन्त्रैवकर्त्तव्या-स्वातंत्र्येवहुदोषस्यपुर्वमभिहितत्वात्॥

अथ तीर्थविधिः॥ महाभारते। बहूपकरणाय ज्ञानानासम्भारविस्तराः प्राप्यन्तेपार्थिवैरेवसमृद्धैर्वानरैःक्क-चित् नार्थन्यूनैरवगणैरेकात्मभिरसंहतैः॥ अवगणैः स-हायशून्यैः। एकात्मभिः स्त्रीरहितैः। तथा च पत्नी रहितेन न विशिष्टफलं प्राप्यत इति भावः। तत्रैव तो-

र्थाभिगमनात्पुण्यम् यज्ञैरपि विशेष्यम् ॥ ब्रह्मपुराणे गङ्गादितीर्थेषुव सन्तिमत्स्यादेवालयेपक्षिगणाश्चसन्ति भावोज्झितास्तेनफलंलभन्तेतीर्थाच्चदेवायतनाच्चमुख्यात् । भावन्ततोहृत्कमलेनिधायतीर्थानिसेवेतसमाहितात्मा । गङ्गादौभवनयैवफलमिति तात्पर्य्यम् गोयानेगोबधःप्रोक्तः हययानेतुनिःफलम् । नरयानेतदर्द्धंस्यात्पद्भ्यांतच्चचतुर्गुणम् । पद्भ्यामिति उपानहादिव्यतिरेकेण सातिशयंतीर्थफलं भवति नतुतत्परिधाने दोषो निषेधा श्रवणात् मिताक्षरास्वरसोप्येवम् यत्त्वर्द्धंहरतिपादुकेतिपठन्ति तन्निबन्धकृद्भिरनादरणाद्‌नाकरमिति निर्णीयते एवं च वर्षातपादिकेव्रतीदंडीवाल्यटवीषुच्चशरीरत्राणकामस्तुसोपानत्कःसदाव्रजेत् इति विष्णुपुराणीयवचने न तीर्थयात्रायामपिउपानत्परिधानमनिषिद्धमावश्यकमिति तीर्थचिन्तामणौ तीर्थप्राप्तौतन्निमितकश्राद्धमर्घावाहनवर्जितन् कर्त्तव्यमाहदेवीपुराणेश्राद्धंच तत्र कर्त्तव्यमर्घावाहनवर्जितम् । तथा अकालेप्यथवाकालेतीर्थश्राद्धंतथानरैः । प्राप्तैरेवसदाकार्य्यङ्कर्त्तव्यंपितृतर्पणमिति । तत्रैतिनिमित्तसप्तमी तन्निमित्तकश्राद्धमित्यर्थःअकालेपिनिषिद्ध कालेपितथाचतीर्थप्राप्तौविहिततिथ्यादिविचारोनकर्त्तव्य इति भावः । सायाह्नादौतीर्थप्राप्तौउत्तरदिनेतीर्थश्राद्धंकुर्य्यात् प्राप्त्युत्तरविहितमुहूर्तेएवतीर्थेश्राद्धविधानात् तीर्थोपवासःकाम्यःनत्वावश्यकः त्रिरात्रमुषित्वासर्वपापेभ्योमुच्यत इति देवलवचनात्फलश्रवणात् मुण्डनञ्चप्रयागावच्छिन्नगङ्गायामेवनान्यत्रगङ्गायांभास्करक्षेत्रेइत्यादि वर्ज्जयित्वागयाङ्गङ्गांइत्यादि वचनानामविगीतशिष्टाचारविषयत्वात् ॥

अथ प्रयागविधिः ॥ पद्मपुराणे पश्चिमाभिमुखीगङ्गाकालिंद्यासहसङ्गता हन्तिकल्पशतं पापंसामाधेनृपदर्लभा अमृतंकथ्यतेराजन् सावेणोभुविकीर्त्तिता तस्यांमाघेमुहूर्त्तन्तुदेवानामपिदुर्ल्लभम् । पश्चिमाभिमुखीप्रयागेवटशाखादौक्कचित् कालिन्द्यासहसङ्गतातुप्रयागेतत्रैव पृथिव्यांयानितीर्थानिपुण्यंस्संन्तोहयाःपुनः स्नातुमायांतितावेण्यांमाघेमासिनराधिप सर्वंतीर्थानिकृष्णानिपापिनांसङ्गदोषतः । भवंतिशुक्लवर्णानिप्रयागेमाघमज्जनात् ॥

माघस्नानमन्त्रस्तु मकरस्थेरवौमाघेंगोविन्दाच्युतमाधव स्नानेदानेंनदेवेशयथोक्तफलदोभव इति ॥

तथा त्रीणिकुण्डानिराजेन्द्रतेषांमध्येतुजान्हवी प्रयागस्यप्रवेशेनपापन्नश्यतितत्क्षणात् । त्रीणीतिएकंप्रयागं नगरेद्वितीयंप्रतिष्ठानंनगरे तृतीयंयमुनादक्षिणे ।

प्रयागेवपनंकुर्य्यात् गयायांपिंडपातनम् । दानन्दद्यात्कुरुक्षेत्रेवाराणस्यान्तनुंत्यजेत् । किङ्गयापिंडदानेन काश्यां दामरणेनकिम् । किंकुरुक्षेत्रदानेन प्रयागेमुण्डनंयदीति । केशानांयावतीसंख्याच्छिन्नानांजान्हवीजले । तावद्वर्षसहस्राणिस्वर्गलोकेंमहीयते यावन्तिनखलोमानिवायुनाप्रेरितानिवै । पतन्तिजान्हवीतोयेनराणांपुण्यकर्मणाम् । तावद्वर्षसहस्राणिब्रह्मलोकेमहीयते ॥

अत्रस्त्रियाअपिसमूलसर्वकेशमुण्डनमेवनच सर्वान्केशान् समुद्धृत्यच्छेदयेङ्गुलिद्वयम् । एवमेवहिनारीणांमुण्डमुण्डनमादिशेत् इति प्रायश्चित्तप्रकरणे श्रुतस्यआकांक्षातोल्यात्तद्वङ्-

गुंलकेशकर्तनमेवप्रयागेप्युचितमिति वाच्यम् केशमूलान्युपा- श्रित्यसर्वपापानिदेहिनाम् । तिष्ठन्तितीर्थस्नानेनतस्मात्तांवाप- येतुवैइत्यादिनातीर्थेसमूल केशवपनस्य वविशिष्यविहितत्वात् एतच्चमुण्डनंस्नाननित्यकर्मादिकृत्वासङ्कल्प्यकर्तव्यम् ॥

सङ्कल्पस्तु ओं अद्ये त्यादिच्छेदनीययावल्लोमसमसंख्य- वहुवर्षसहस्रावच्छिन्नस्वर्गलोकमहितत्वकामोगङ्गायांवपनमहं- करिष्ये इति सङ्कल्प्योपवसेत् ॥

ततः श्राद्धाधिकारिणातीर्थप्राप्तिनिमित्तकपार्वणंकार्य्यम् तदसम्पत्तौषट्पुरुषपिण्डदानमपिकर्तव्यम् तदुत्तरदिनेऋण- मोचनतीर्थेस्नायात् ओ अद्ये त्यादिसकलऋणविमुक्तिस्वर्गलोका- वाप्त्यमृतत्वकामऋणमोचनतीर्थेस्नानमहङ्करिष्ये ओ अद्ये- त्यादिसर्वपापविमुक्तिपूर्वकस्वर्गगमन कामोऽद्यादिमाघेऽयहंप्रा- तस्स्नानमहंकरिष्य ॥

प्रयागपश्चिमेकम्वलाश्वतरसमोपेयमुनोत्तरकूलेयमुनास्नाने।

ओ अद्ये त्यादिसर्वपापविमुक्तिकामः कम्वलाश्वतरसमी- पेयमुनायांस्नानमहङ्करिष्ये इति सङ्कल्पः स्नानानन्तरन्तर्प- णंतत्रापि अत्रजलपानेप्येतदेवफलम् अत्रैवमहादेवदर्शनम् ॥

ततोदशाश्वमेधिकस्थलंगच्छेत् ओँ अदेत्यादिअश्वमेध- जन्यफलसमफलप्राप्त्याढ्यस्वरूपवत्वदक्षत्वदातृत्वधार्म्मिकत्व भवनकामोदशाश्वमेधिकतीर्थस्नानमहङ्करिष्ये इति सङ्कल्पः ॥

ततःस्नानतर्प्पणेकुर्य्यात् प्रयागेहेमशृङ्गिसवत्सगोदाने गोब्राह्मणौसम्पूज्य ओँ अदेत्यादि गङ्गायमुनसङ्गमे एतद्गो- वत्सोभयरोमसमसंख्यकवर्षसहस्रावच्छिन्नस्वर्गलोकमहितत्व-

नरकादर्शनोत्तराक्षयसकलहर्षवहुदारपुत्रभृत्यवर्गवहु विधघो-
रमहापातकसंक्रमपरित्राणकाम इमां स्वर्णशृङ्गीं रौप्यखुरां
घेलकठीं पयस्विनींकपिलां गां रुद्रदैवतामित्यादि ततोदक्षिणा
तीर्थेनप्रतिगृह्णीयात्पुण्येष्वायतनेषुच निमित्तेषुचसर्वेषुअप्रम-
त्तोभवेद्द्विजः । निमित्तेषु संक्रान्त्यादिषु अप्रमत्तः प्रमादशून्यः ॥

अथ गयाविधिः तत्राविभक्तानां मध्ये ज्येष्ठस्यतदाज्ञ-
याकनिष्ठस्यापि श्राद्धेधिकारः विभक्तानान्तुसर्वेषामेवाधिकारः
तत्र नारदः भ्रातृणामविभक्तानामेकोधर्मः प्रवर्तते विभागेस-
तिधर्म्मोपिभवेत्तेषांपृथक् पृथक् इति एवमेव पार्वणेपि एको-
द्दिष्टे तु सर्वेषामेव पृथगधिकारः । द्वैतपरिशिष्टे येतु एष्ट-
व्यावहवःपुत्राःशीलवन्तोगुणान्विताः तेषांवैसमवेतानांयद्ये-
कोपिगयांव्रजेत् इतिवचने समवेतानामविभक्तानामितिव्या-
ख्यायगयाश्राद्धे अविभक्तानामपिपृथगधिकारमाहुस्तेभ्रान्ताः
भ्रातृणामविभक्तानामित्यादिनारदवाक्यवलाद्वाधसापेक्ष्यवि-
ख्यापत्तेः किञ्च समवेतानामित्यस्य तदर्थकत्वे मानाभावात्
मिलितानामित्यस्यैवतदर्थकत्वात् लिखितवचनादेवसंसर्गान-
न्तरन्नपृथगधिकारो द्रष्टव्य इति गया श्राद्धे कालानियमः
तथाहि वायव्ये गयायांसर्वकालेषुपिण्डंदद्याद्विचक्षणः अ-
धिमासेजन्मदिनेअस्तेचगुरुशुक्रयोः । नत्यजेच्चगयाश्राद्धंसिं-
हस्थे चवृहस्पतौ अत्रार्घावाहनवर्जितंश्राद्धम् तथाहि पाय-
सेनगयायांचशक्तुनापिण्डकेनवा चरुणातण्डुलाद्यै र्वापिंडदान-
म्विधीयते श्राद्धासम्पत्तौपिंडमात्रमपिदद्यात् पिंडदानं ततःश-
स्तंपितॄणांचातिदुर्लभम् । विलम्बोनैवकर्त्तव्योनैवविघ्नं समा-

चरेत् इतिस्मृतेः अत्र पतितानामसंस्कृतानामपि श्राद्धम् तथाहि गारुडे ब्रह्महत्यासुरापानंस्तेयंगुर्वङ्गनागमः पापंतत्सं- गमंसर्वंगयाश्राद्धाद्विनश्यति असंस्कृतामृतायेचपशुचौरहता- श्चयेतपंदष्टागयाश्राद्धान्मुक्ताःस्वर्गंव्रजन्तिते। अत्र ब्रह्महत्येत्या- दिपदमुद्दिश्य गयाश्राद्धं क्रियतेतस्यमहापातकमपिनश्यतिइति तात्पर्यं असंस्कृताइतितेहि गयाश्राद्धात्सुगतयो भवन्तीति तात्पर्यमिति तीर्थचिन्तामणिः। सम्वत्सरानन्तरं पतितस्व- र्गकामनया गयाश्राद्धंतथाहि ब्रह्मपुराणे क्रियतेपतितानांतुग- तेसम्वत्सरेक्कचित् । देशधर्मप्रमाणत्वाद्गयाकूपेषुवन्धुभिः । फलमाह मात्स्ये पितृतीर्थंगयानामसर्वतीर्थवरंस्मृतं । यत्रा- स्तेदेवदेवेशःस्वयमेवपितामहः यत्रैषापितृभिर्गीतागाथाभाग- मभोप्सुभिः एष्टव्याबहवःपुत्रायद्येकोपिगयांव्रजेत् यजेतवा- श्वमेधेननीलंवावृषमुत्सृजेत् गारुडे ब्रह्मज्ञानंगयाश्राद्धंगोग्रहे- मरणंतथा वासःपुंसांकुरुक्षेत्रे मुक्तिरेषाचतुर्विधा । सकृद्गया- भिगमनंसकृत्पिंडप्रपातनं दुर्लभंकिम्पुनर्नित्यमस्मिन्नेवव्यव- स्थित इति अपुत्रं विशालराजानं प्रत्याह वराहे राजन् पितृं- स्तर्प्य पुत्रहेतोर्गत्वा गयायांविधिवच्चपिण्डैः ध्रुवंसुतस्ते भवि- तानुवीरसहस्रदाता सकलक्षितीशः। अत्र महापातकिनोपि श्राद्धोद्देश्यस्य गयाश्राद्धेन सद्गतिर्भवतिकर्तृ पुत्रकामस्वेत- स्यपुत्रोपि भवतीत्यर्थं इति चिन्तामणिः गारुडे गयायांपिंड- दानेनयत्फलंलभतेनरः नतच्छक्यंमयावक्तुंकल्पकोटिशतैरपि इति ब्रह्मवाक्यं वृहस्पतिः कांक्षन्तिपितरः पुत्रान्नरकाद्भयभी- रवः । गयांयास्यतियःपुत्रःसोऽस्मान्संतारयिष्यति गयायांध

मंपृष्टेचसदसिवूह्मणस्तथा। गयाशीर्षेऽक्षयवटेपितृदत्तमथाक्षयम् वूह्मारण्यंधर्मपृष्ठंधेनुकारण्यमेवच दृष्टैव्तानिपितृंश्चात्रवंशान्विंशतिमुद्धरेत्। वायव्ये महाकल्पकृतंपापंगयायांच-विनश्यति। महाभारते पुलस्त्ययात्रायांततोगयांसमासाद्यवूह्मचारीजितेन्द्रियः। अश्वमेधमवाप्नोतिगमनादेवभारत यत्राक्षयवटोनामत्रिषुलोकेषुविश्रुतः। यत्रदत्तंपितृभ्यस्तुभवत्यक्षयमित्युत तथा शुक्लकृष्णावुभौपक्षौगयायांयोवसेन्नृप। पुनात्यासप्तमंतत्रकुलान्यत्रनसंशयः। एष्टव्यावहवःपुत्रायदेकोपिगयांवूजेत्। तत्तारयंतिसन्तप्तान् दशपूर्वान् दशावरान्। अवरान् अधस्थान् पुरुषानिति शेषः अत्र पितुः पृथगेव माश्रादिश्राद्धम् तथाहि वायव्ये अष्टकासुचवृद्धौ चगयायांचक्षयाऽहनि मातुः श्राद्धंपृथक् कुर्य्यादन्यत्रपतिनासह वृद्धौआभ्युदयिकेक्षयाऽहनिवार्षिके तथा चैतच्चतुष्टये पृथगेव एतद्भिन्ने सर्वकर्मणि पार्वणादौन मातृणां पृथक्श्राद्धकरणम् पितृश्राद्धेनैवतच्छ्राद्धसिद्धेरिति भावः स्मृतिः ब्रह्मणाप्रथितोविष्णुःफल्गुकोह्यभवत्पुरा। दक्षिणाग्नौहुतंनूनंतद्भवंफल्गुतीर्थकम्। तीर्थानियानिसर्वाणिभुवनेष्वखिलेष्वपि। तानिस्नातुंसमायान्तिफल्गुतीर्थंसुरैःसह। गङ्गापादोदकंविष्णोःफल्गुर्य्यंदिगदाधरः इयं हिरुद्ररूपेणतस्माद्गङ्गाधिकंविदुः अश्वमेधसहस्राणांसहस्रंयःसमाचरेत् नासौतत्फलमाप्नोतिफल्गुतीर्थेयदाप्नुते। फल्गुतीर्थेविष्णुजलेकरोतिस्नानमादृतः पितृणांविष्णुलोकायभुक्तिमुक्तिप्रसिद्धये तथा। फल्गुतीर्थेनरःस्नात्वादृष्ट्वादेवंगदाधरम् आत्मानंपितृभिःसार्द्धंयन्नयेद्वैष्णवंपदम्॥

अथ वाराणसी ब्रह्मपुराणे वरणाचापरासिश्चैवद्वे नद्यौसुर-वल्लभे । अन्तरालेतयोःक्षेत्रं भूमावपिविशेन्नतत् पञ्चक्रोश-प्रमाणन्तत्क्षेत्रं दत्तंमयातत्र । एतेन असीवरणयोर्म्मध्यं वारा-णसीक्षेत्रमिति नियमः असीवाह्यस्यवाराणसीक्षेत्रत्वाभावः सिद्धः द्वियोजनंतुतत्क्षेत्रं पूर्वपश्चिमतःस्थितम् अर्द्धयोजनवि-स्तीर्णंदक्षिणोत्तरतःस्मृतम् योजनं चतुःक्रोशंस्कांदे ब्रह्मघ्नगो-घ्नगुरुतल्पगभिन्नवृत्तन्यासापहारिकुहकादिनिषिद्धवृत्तिः सं-सारभूतदृढपाशविमुक्तदेहोवाराणसीञ्चसमुपैतिहियेपिलोकः । मात्स्ये प्रयागादपितीर्थाग्र्यादिदमेवमहत्तरम् अल्पायासेनचै-वात्रमोक्षप्राप्तिः प्रजायते । इदं वाराणसीक्षेत्रम् लैङ्गे ब्रह्म-हायोभिगच्छेत्तुअविमुक्तंकदाचन तस्यक्षेत्रस्यमाहात्म्याद्ब्रह्म-हत्यानिवर्त्तते । अविमुक्तंवाराणसी तथाहि मात्स्ये विमुक्त-म्मयायस्मान्मोक्ष्यतेनकदाचन महत्क्षेत्रमिदंतस्मादविमु-क्तमितेस्मृतम् । तथा अज्ञानाद्ज्ञानतोवापिस्त्रियावापुरुषे-णवा । यत्किंचिदशुभंकर्मकृतंमानुषवुद्धिना । अविमुक्तंप्रवि-ष्टस्यतत्क्षणंभस्मसाद्भवेत् अत्रवासफलमाह लैङ्गे सदायजतिय-ज्ञेनसदादानंप्रयच्छति । सदातपस्वीभवतिह्यविमुक्तेस्थि-तोनरः । नसागतिःकुरुक्षेत्रेगंगाद्वारेनपुष्करे । यागतिर्विहिता-पुंसामविमुक्तनिवासिनाम् । सर्वात्मतातपःसत्यंप्राणिनांना-त्रसंशयः । अविमुक्तेवसेद्यस्तुममतुल्योभवेन्नरः । अविमुक्ते स्थितोनित्यंपांशुभिर्भस्मनेरितैः स्पृष्टत्वाद्दुष्कृतकर्माणोया-स्यन्तिपरमांगतिम् स्वर्गापवर्गयोर्हेतुरेतत्तीर्थवरंभुवि । यस्त्वत्र पंचत्वंयातिमोक्षंयातिनसंशयः । जन्मान्तरसहस्रेणमुञ्चन्यो-

गोयदाप्नुयात् । तमिहैवपरंमोक्षमरणादधिगच्छति । पंचतां मरणम् इहैव इह जन्मन्येव अन्यच्च प्राणांस्त्यजंतियेत्वत्र प्राणिनस्तत्वतस्तथा रुद्रत्वंतेसमासाद्यमोदन्तेभवतासह अकामोवासकामोवाअपितिर्य्यग्गतोपिवा अविमुक्तेत्यजन्प्राणान्ममलीकेमहीयते । इतीश्वरोक्तिः । लैङ्गे अविमुक्तेस्थितारुद्रा भक्तानांप्रीतिदायकाः । कर्णजापंप्रयच्छन्तितिमिच्चंडेश्वरादयः कर्णजापस्तारकब्रह्मोपदेशः अत्र मरणस्य यद्यपिपरममुक्तिसायुज्यसारूप्यसालोक्यानिफलत्वेन श्रूयन्ते तथापि शुचीनांपरमात्मभक्तानां तदर्पितकर्मणां परममुक्तिस्तथा अपकृष्टानाम् अग्निप्रविष्टानां सायुज्यं तिर्य्यक्प्रभृतीनामत्यन्तपापीयसां च सारूप्यम् ततोप्यधमानां पतितादीनां सालोक्यमिति द्रष्टव्यमितितीर्थचिन्तामणिः । लैङ्गेनाविमुक्तेमृतः कश्चिन्नरकंयातिकिल्बिषी इश्वरानुगृहीताहिसर्वेयान्तिपरांगतिम् तत्रैव दशानामश्वमेधानांयज्ञानांयत्फलंस्मृतम् । तदवाप्नोतिधर्मात्मास्नात्वातत्रवरानने । तत्रैव स्वल्पमप्यत्रयोदद्याद्ब्राह्मणेवेदपारगे शुभांगतिमवाप्नोतिअग्निवच्चैवदीप्यते दशसौवर्णिकंपुष्पंयोविमुक्तंप्रयच्छति अग्निहोत्रफलंधूपगंधदानेशृणुप्रिये भूमिदानेनतुल्यंचगोप्रदानफलंस्मृतम् दशसौवर्णिकेत्यादि एकपुष्पप्रदाने दशसुवर्णदानजन्यफलमित्यर्थः तथा किमर्थंबहुनोक्तेनयद्दानंक्रियतेनरैः धर्मकामार्थमुद्दिश्यतदनंतफलंलभेत् । उपवासंतुयःकृत्वाविप्रान्संतर्पयेन्नरः ससौत्रामणियज्ञस्यफलमाप्नोतिनिश्चितम् । ब्राह्मे तत्रदीपप्रदानेनज्ञानवत्स्फुरतोन्द्रियम् तत्रेति का-

श्यामित्यर्थः तथा एकाहमुपवासंयःकरिष्यतियशस्विनि । फलम्वर्षशतस्येहलभतेतत्परायणः । वर्षशतस्योपोषितस्येत्यर्थः । अविमुक्तेमहादेवमर्चयन्तिस्मरन्तिये सर्वपापविमुक्तास्तेसन्तिष्ठन्त्यजरामराः । अविमुक्तंसमासाद्यलिङ्गमर्च्चयतेनरः । कल्पकोटिशतैश्चापि तस्यनास्तिपुनर्भवः । पुनर्भवः पुनर्जन्म । कापिलह्रदमुपक्रम्य ईश्वर आह तत्रापिस्वयमेवाहंवृषध्वजइतिस्मृतः कपिलाह्रदतीर्थेस्मिन्स्नात्वासंयतमानसः । वृषध्वजमिमंदृष्ट्वासर्वयज्ञफलंलभेत् । स्वर्लोकतांमृतश्चापिअर्चयित्वातुमामिह लभतेदेहभेदेनगणत्वञ्चातिदुर्लभम् । कापिलह्रदः काश्या उत्तरे पञ्चक्रोशपथि पञ्चक्रोशेऽन्ये के देवा अनन्तफलदायिनो विस्तरभयान्नेह तेषां फलान्यभिहितानि पञ्चक्रोशस्तुत्रिपञ्चसप्तदिनेन वा यथो शक्ति कुर्यात् गङ्गास्नाने विष्णुपुराणे स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति अपूर्वपूण्यावाप्तिस्तुसद्योमैत्रेयजायते । भारते स्नातानांशुचिभिस्तोयैर्गाङ्गेयैःप्रयतात्मनाम् व्युष्टिर्भवतियापुंसांनसाक्रतुशतैरपि । व्युष्टिः पुण्योपचयः अपहत्यतमस्तोव्रं यथाभात्युदयेरविः । तथापहत्यपापानिभातिगङ्गाजलोक्षितः । अनेकजन्मसम्भूतंपुंसांपापंप्रणश्यति । स्नानमात्रेणगङ्गायाःसद्यःस्यात्पुण्यभाजनम् । महापातकसंयुक्तोयुक्तो वासर्वपातकैः । गङ्गास्नानेनविधिना मुच्यतेसर्वपातकैः । महामातकंजन्मान्तरीयम् नत्वैहिकम् अन्यथानधिकारापत्तिः आग्नेये योगृहेवर्तमानोपिस्वांस्नानेकोर्तयिष्यति सयास्यतिदिवन्नित्यमित्याहवरुणस्त्विह ॥

अथ पुरुषोत्तमक्षेत्रम् तत्रास्तेभारतेवर्षेदक्षिणोदधिसंस्थितः ओड्रदेशइतिख्यातः स्वर्गमोक्षप्रदायकः समुद्रस्योत्तरेतीरे तस्मिन्देशेद्विजोत्तमाः आस्तेगुह्यंपरंक्षेत्रं मुक्तिदंपापनाशनम् सर्वत्रबालुकाकीर्णंपवित्रं सर्वकामदम् दशयोजनविस्तीर्णंक्षेत्रं परमदुर्लभम् वर्णानांब्राह्मणोयद्वद्वैनतेयस्तुपक्षिणाम् तथासमस्ततीर्थानांवरिष्ठंपुरुषोत्तमम् सत्यंसत्यंपुनःसत्यंक्षेत्रंतत्परमंमहत् पुरुषाख्यंसकृद्दृष्ट्वासागराम्भःसकृन्मतम् ब्रह्मविद्यांसकृज्ज्ञात्वागर्भवासोनविद्यते पुरुषाख्यंपुरुषोत्तमं जगन्नाथमिति यावत् धन्यास्तेविबुधप्रख्यायेवसन्त्युत्कलेवराः तीर्थराजजलेस्नात्वापश्यन्तिपुरुषोत्तमम् स्वर्गेवसन्तितेमर्त्यानतुतेराजसालये तीर्थराजःसमुद्रः राजसालये मनुष्यलोकेतथा दक्षिणस्योदधेस्तीरे न्यग्रोधोयत्रतिष्ठति यस्तुकल्पेसमुत्पन्नेमहदुल्कानिबर्हणे विनाशंनैवमस्येति स्वयंतत्रैवमास्थितः दृष्टमात्रे वटेतस्मिनच्छायामाक्रम्यवासकृत् ब्रह्महत्याप्रमुच्येतपापेष्वन्येषुकाकथा । प्रदक्षिणंकृतंयैस्तुनमस्कारन्तुजन्तुभिः सर्वेविधूतपापास्तेगताःस्युः केशवालयम् । न्यग्रोधो वटः भगवद्वृत्तः इन्द्रद्युम्नसरोनामतीर्थं यज्ञाङ्गसम्भवम् यत्रस्नात्वासकृल्लोकःशक्रलोकमवाप्यते दापयिष्यति यः पिण्डास्तटेतस्मिन्सरश्शुभे कुलैकविंशमुद्धृत्यशक्रलोकंगमिष्यतीति तीर्थचिन्तामणौ मार्कण्डेयह्रदंगत्वास्नात्वाचोदङ्मुखःशुचिः निमज्जयेत्त्रींस्तुवारान् इमंमन्त्रमुदीरयेत् संसारसागरेमग्नं पापग्रस्तमचेतसम् त्राहिमांभगनेत्रघ्न त्रिपुरारेनमोस्तुते नमःशिवायशान्तायसर्वपापहरायच स्नानंकरोमिदे-

वेशममनश्यतुपातकम् नाभिमात्रे जलेस्थित्वा विधिवद्देवता-
ऋषीं स्तिलोदकेन मतिमान् पितॄनन्यांश्चतर्प्पयेत् मार्क्कण्डे-
यहृदे चैव स्नात्वादृष्ट्वा शंकरम् दशानामश्वमेधानांफलंप्राप्नो
तिमानवाः दृष्ट्वावटंवैनतेयं यः पश्येत्पुरुषोतमम् संकर्षणंशुभद्रां
चसयातिपरमां गतिम् मार्कण्डेयवटंकृष्णंरौहिणेयंमहोदधिं इ-
न्द्रद्युम्नसरश्चैवपंचतीर्थंविधिस्मृतः यत्फलंसर्वदेवेषुसर्वयज्ञेषु य-
त्फलम् तत्फलंसर्वंदेवेषुसर्वयज्ञेषुयत्फलम् तत्फलंसमवाप्नो-
तिनरःकृष्णप्रणम्यच किंचात्रबहुनोक्तेनमाहात्म्यंतस्यभोद्वि-
जाः दृष्ट्वाकृष्णंनरोभक्त्यामोक्षंप्राप्नोतिदुर्लभम् पापैर्विमुक्तः-
शुद्धात्माकल्पकोटिसमुद्भवैः श्रियापरमयायुक्तः सर्वैःसमु-
दितोगुणैः सर्वकामसमृद्धेनविमानेनस्ववर्चसा त्रिसप्तकुलमु-
द्धृत्यनरोविष्णुपुरंव्रजेत् ततःकल्पशतंयावद्भुक्ताभोगान्म-
नोरमान् गन्धर्वाप्सरसःसार्द्धंयथाविष्णुश्चतुर्भुजः तत्रैव श्वे-
तगङ्गांनरः स्नात्वायःपस्येच्छ्वेतमाधवम् मत्स्याख्यंमाधवंचै-
वश्वेतद्वीपंसगच्छतिश्वेतोनामराजा तथा देवानृषीन्मनुष्यां-
श्चपितन्संतर्प्पयन्नतः तिलोदकेनविधिनानामगोत्रविधानवित्
स्नात्वैवंविधिवत्तत्रसोश्वमेधफलंलभेत्।

अथ गङ्गामाहात्म्यम् तत्र भारते।

तेदेशास्तेजनपदास्तेशैलास्तेपिचाश्रमाः येषांभागीरथीग-
ङ्गामध्येयातिसरिद्वरा पूर्वेवयसिकर्म्माणिकृत्वापापानियेनरा-
श्शोषेगंगांनिषेवन्तेतेपियान्त्युत्तमाङ्गतिम् तिष्ठेद्युगसहस्रन्तु
पादेनैकेनयःपुमान् मासमेकंतुगङ्गायां समौस्यातांनवासमौ ग-
ङ्गायामिति तिष्ठेदिति शेषः भविष्ये कृतेतुसर्वतीर्थानि त्रेतायां-

पुष्करंवरम् द्वापरेयज्ञमेवाहुर्दानमेकंकलौयुगे वरमिति स-
र्वत्र सम्बध्यते ब्रह्मपुराणे कलौतुसर्वतीर्थानिस्वंस्वंवीर्यंस्व-
भावतः गङ्गायांप्रतिमुंचतिसातु देवीनकुत्रचित् सा देवी गंगे-
त्यर्थः स्कांदे योसौसर्वगतोविष्णुश्चित्स्वरूपोजनार्दनः सएव-
द्रवरूपेणगङ्गाम्भोनात्रसंशयः गङ्गाम्भो जलम् वर्ज्यं पर्यु-
षितंतोयंवर्ज्यं पर्युषितंदलम् अवर्ज्यंजान्हवीतोयमवर्ज्यंतु-
लसीदलम् पूर्वदिनोद्धृतमुत्तरदिने पर्युषितंतोयं जलं दलं
पत्रं अवर्ज्यमत्याज्यम् तथाच गङ्गाजले पर्युषितत्वदोषो ना-
स्तीति भावः मात्स्ये तीर्थयात्राविधिंकृत्स्नमकुर्वाणोपियोनरः
गङ्गातोयस्यमाहात्म्यात्सोप्यत्रफलमाप्नुयात् भविष्ये सर्वयज्ञ-
तपोदानयोगस्वाध्यायकर्मभिः यत्फलंलभतेभक्त्यागङ्गातीरे-
निवासतःसमातृपितृदाराणांकुलकोटिमनन्तकम् गङ्गाभक्ति-
स्तारयतिसंसारार्णवतोबहुम् भविष्ये कन्यादानैस्तथाऽन्यत्र-
भूमिदानैश्चभक्तितः अन्नदानैश्चगोदानैस्स्वर्णदानादिभि-
स्तथा वराश्वगजदानैश्चयत्पुण्यंपरिकीर्त्तितं ततः शतगुणंपु-
ण्यंगंगागण्डूषतोभवेत् चान्द्रायणसहस्राणांयत्फलंपरिकीर्त्ति-
तम् ततोधिकफलंगंगातोयपानादवाप्यते स्कांदे गण्डूषमात्र-
पानेनअश्वमेधफलंलभेत् स्वच्छन्नंयः पिवेदम्भस्तस्यमुक्तिः
करेस्थिता त्रिभिस्सारस्वतंतोयंसप्तभिस्त्वथयामुनन् नार्मदं-
दशभिर्मासैर्गंगात्रर्षेणजीर्यति त्रिभिरित्यादितृतीयान्तत्रयं
मासैर्जीर्यतीत्यनेनान्वेति महाभारते वाङ्मनः कर्मजैर्ग्रस्तः
पापैरपिपुमानिह वीक्ष्यगङ्गांभवेत्पूतस्तत्रमेनास्तिसंशयः स-
प्तावरान्सप्तपरान्पितॄंश्चापियमालयात् पुमांस्तारयते गङ्गस-

म्यग्दृष्ट्वावगाह्य च दर्शनात्स्पर्शनात्पानात्तथागङ्गेतिकीर्त्तनात्
पुण्यात्पुनातिपुरुषान्शतशोथसहस्रशः भविष्ये सहस्रयोजन-
स्थाश्चगंगांभक्त्यास्मरन्तिये गंगागङ्गेतिचब्रूयुर्मुच्यन्तेपिच-
पातकात् येस्मरन्तिचवैगंगांगङ्गाभक्तिपराश्चये तेप्यशेषैश्चपा-
पैश्चमुच्यन्तेनात्रसंशयः ब्रह्माण्डे एकेनस्नानमात्रेणविधिना-
मुक्तिमान्नरः अश्वमेधफलंसद्योगंगायांप्राप्नुयाद्ध्रुवम् तथा
अन्यस्थानकृतंपापंगंगातीरेविनश्यति गंगास्थानकृतंपापंगंगा-
स्नानेननश्यति अत्रस्नानेइत्यनन्तरं नञपदं न तु स्नानेनेतितृ-
तीयान्तं भविष्ये संक्रान्त्यांपक्षयोरन्तेग्रहणेचन्द्रसूर्ययोः गं-
गास्नातोनरःकामात्ब्रह्मणस्सदनंव्रजेत् ब्रह्माण्डे चन्द्रसूर्य-
ग्रहेचैवयोवगाहेत जान्हवीं सस्नातःसर्वतीर्थेषुकिमर्थमटते-
महीम् गवांकोटिसहस्रस्यसम्यग्दत्तस्ययत्फलं तत्फलंजान्हवी-
स्नानेराहुग्रस्तेनिशाकरे मात्स्ये कुरुक्षेत्रसमागंगायत्रकुत्राव-
गाहिता कुरुक्षेत्राद्दशगुणायत्रविन्ध्येनसंगता विन्ध्याच्छतगु-
णाप्रोक्ताकाशीपुर्य्यान्तुजान्हवी विन्ध्यसंगता तु विन्ध्यवा-
सिनीसमीपे कर्णतीर्थे तथाविन्ध्याच्छतगुणाप्रोक्तायत्रपश्चिम-
वाहिनी तस्मात्सहस्रगुणितायत्रचोत्तरवाहिनी पश्चिमोत्तरवा-
हिनि तु प्रयागे वटेशादौ च भविष्ये गंगाद्वारेकुशावर्त्तेस्ना-
नेपुण्यफलंशृणु सप्तानांराजसूयानांफलंस्यादश्वमेधजं। गं-
गायां सन्ध्यातर्पणयोः फलमाह गंगायांशतसाहस्रीति गंगा-
यामिति सन्ध्यादिकरणे इतिशेषः शतसाहस्रीति तथा चा-
न्यत्र सन्ध्यादिकरणफललक्षगुणफलं गङ्गायामित्यर्थः विष्णु-
पुराणे दत्ताः पितृभ्योयत्रापस्तनयैःश्रद्धयान्वितैः अक्षयान्तप्र-

यच्छन्तितृप्तिंमैत्रेयदुर्लभाम् यावन्तश्चतिलामर्त्यैर्गृहीताः पि-
तृकर्मणि तावद्वर्षसहस्राणिपितरःस्वर्गवासिनः पितरः पितृ-
लोकवासिन इति तीर्थचिन्तामणिः भविष्ये गंगातर्पणसम्प्री-
ताःश्राद्धेपिण्डसन्तर्पिताः आरुह्यसहसायान्ति ब्रह्मलोकंसनात-
नम् श्राद्धादिकं जलोपकंठे कर्त्तव्यम् ॥ गंगान्तर्जले मरणे
फलमाह आग्नेये विष्णुवाक्यम् येमुंचन्तिनराःप्राणान्तिष्ठन्तः
सन्निधौतव तेमेलोकंगमिष्यन्तिपूज्यमानादिवौकसाः तथा
अर्द्धोदकेतुजान्हव्यांम्रियतेऽनशनेनयः सनचैतिपुनर्जन्मब्रह्म-
सायुज्यमेतिच अर्द्धोदकं चरणान्नाभिपर्य्यन्तमुदकम् ब्रह्माण्डे
यागतिर्योगयुक्तस्यसत्वस्थस्यमनीषिणः सागतिस्त्यजतःप्रा-
णान्गंगायान्तुशरीरिणः अनशनंगृहीत्वायोगंगातीरेमृतोनरः
सद्यएवपरंमोक्षंप्राप्नोतिपितृभिःसह अत्रदूरेसमीपेचसदृशं-
योजनद्वयम् गंगायांमरणेनेहनात्रकार्य्याविचारणा ज्ञानतोऽ
ज्ञानतोवापिकामतोऽकामतोपिवा गंगायान्तुमृतोमर्त्यःस्वर्गंमो-
क्षंचविन्दति महाभारते तीर्थंचशौकरन्नाममहापुण्यंमुनेशृणु
यस्मिन्नाविरभूत्पूर्वंम्वाराहाकृतिरच्युतः । शतमग्निचितांपु-
ण्यंज्योतिष्टोमद्वयस्यच अग्निष्टोमसहस्रस्यफलमत्राप्नुयान्नरः
अत्रनिवासदिनदर्शनादिलघुगुरुत्वादिभेदेनफलभेदः तथा त-
त्रैवब्राह्मणस्तीर्थंज्योतिष्टोमायुतस्यच अश्वमेधत्रयस्यापिस्नात-
स्तत्रफलंलभेत् तथा गंगाद्वारेकुशावर्तेविल्वकेनीलपर्वते ती-
र्थेकनखलेस्नात्वाधूतपापोदिवंव्रजेत् काशीमभिधायतत्रैवपवि-
त्राख्यंततस्तीर्थं सर्वतीर्थात्पविसकम् द्वयोर्विश्वजितस्तत्रस्ना-
नात्पुण्यंलभेन्नरः वेणीवाह्यन्ततस्तीर्थंशरयूयत्रसंगता सपु-

पयाश्चमहापुण्यास्वसास्वद्रेवसंगता हरेर्दक्षिणपादाब्जक्षालन-त्वमवापह वामपादोदकम्विद्धिशरयूंमानसोद्भवाम् तीर्थेतत्रा-र्च्चयन्रुद्रम्विष्णुर्विष्णुत्वमाप्नुयात् पंचाश्वमेधफलदंस्नानन्त-स्मिनघापन्नंवेणोवाह्य दर्दरोति प्रसिद्धम् तत्रैवगाण्डकन्तोर्थं-गण्डकीयत्रसङ्गता गोसहस्रस्यदानंचतत्रस्नानेनसम्मतम् रा-मतोर्थंततः पुण्यम्वैकुठोयत्रसन्निधौसोमतीर्थस्ततःपुण्यंयत्रा-सौमुद्गलोमुनिः चंपकाख्यंततस्तोर्थंयत्रगङ्गोत्तरायणी तथा गंगाद्वारेप्रयागेच्चगंगासागरसंगमे स्नात्वैवव्रह्मणोविष्णोःशि-वस्यचपुरंव्रजेत् महाभारते गंगायास्त्वथराजेन्द्रसागरस्यचसंग-मे अश्वमेधंदशगुणम्प्रवदंतिमनोषिणः अश्वमेधंदशगुणम्फल-मितिशेषः ॥ इतिसच्छाब्दिकश्रीमानिकशर्म्मात्मजसत्ताङ्कि-कमहामहोपाध्याय,श्रीअमृतनाथशर्म्मंकृतसारसमुच्चयार्णवेकृ-त्यसारसमुच्चयस्समाप्तः ॥

इति ।

---

इति सूचीपत्रम् ।